गुरुकुल प्रेस, गुरुकुल कांगड़ी।

ओ३म्

संख्या 8632

तिथि 3/2.0.5

# गुरुकुल विश्वविद्यालय कांगड़ी

श्री महाशय श्री प्रो० इन्द्र जी से पुस्तकों का मूल्य

रु. ४॥=) चार रुपया दस आने केवल गुरुकुल की

पुस्तकालय निधिमद्धे रो० संख्या पर जमा

कोषाध्यक्ष

आचार्यार्थ

गुरुकुल प्रेस, गुरुकुल कांगड़ी।

ओ३म्

संख्या 8636

तिथि 16-3-2005

# गुरुकुल विश्वविद्यालय कांगड़ी

श्री महाशय पं. इन्द्र जी से एक प्रति संस्कृत प्रवेशिका का मूल्य

रु. ॥=) दस आना केवल गुरुकुल की

पुस्तकालय निधिमद्धे रो० संख्या पर जमा

कोषाध्यक्ष

आचार्यार्थ

# बालनीतिकथामाला



## सिंहशशयोः

कस्मिंश्चिद्वने भासुरको नाम सिंहः प्रतिवसति स्म। असौ नित्यमेव अनेकान् मृगशशकादीन् व्यापादयामास[1]।

अथैकदा तद्वनवासिनः सर्वे वराहमहिषशशकादयो मिलित्वा तमभ्युपेत्य प्रोचुः—"स्वामिन् किमनेन सकलमृगबधेन[2]। तव एकेनैव मृगेण तृप्तिर्भवति। तत् क्रियतामस्माभिः सह समयः[3]। अद्य प्रभृति प्रतिदिनमेको मृगस्तव भोजनाय समेष्यति। एवं कृते तव प्राणयात्रा[4] क्लेशं विना भविष्यति, अस्माकमपि सर्व्वोच्छेदनं न स्यात्। तदेव राजधर्मोऽनुष्ठीयताम्"।

(१) व्यापादयामास विनाशयामास।
(२) सकलमृगबधेन समस्तपशुसंहारेण।
(३) समयः प्रतिज्ञा नियम इति यावत्।
(४) प्राणयात्रा प्राणधारणं जीविकानिर्व्वाह इति यावत्।

अथ तेषां तद्वचनमाकर्ण्य भासुरक आह—"अहो सत्यमभिहितं भवद्भिः । परं यदि नित्यमेव एको मृगो नागमिष्यति, तन्नूनं सर्व्वानेव भक्षयिष्यामि"। अथ ते तथेति प्रतिज्ञाय निश्चिन्तास्तत्र वने निर्भयाः पर्य्यटन्ति । एकश्च प्रतिदिनं क्रमेणायाति । वृद्धो वा वैराग्ययुक्तो वा शोकग्रस्तो वा पुत्रकलत्रनाशभीतो वा तेषां मध्यात् तस्य भोजनार्थं मध्याह्नसमये उपतिष्ठते ।

अथ कदाचित् शशकस्य वारः[५] समायातः । प्रेषितश्च अनिच्छन्नपि स समस्तमृगैः । स च मन्दं मन्दं गत्वा वेलातिक्रमं विधाय व्याकुलहृदयः सिंहस्य बधोपायं चिन्तयन् दिनशेषे प्राप्तः । सिंहस्तु वेलातिक्रमेण क्षुधार्त्तः कोपाविष्ट सृक्कणी[६] परिलेलिहन् अचिन्तयत्—"अहो मया प्रातरेव निःसत्त्वं[७] वनं कर्त्तव्यम्" ।

एवं चिन्तयति तस्मिन् शशको मन्दं मन्दं गत्वा प्रणम्य तस्याग्रे स्थितः । अथ तं चिरादायातं लघुकलेवरञ्चावलोक्य कोपज्वलितस्तं निर्भर्त्सयन्नाह-"रे शशकाधम एकस्तावत् लघुस्त्वम्, अपरतश्च वेलातिक्रमेणागतः । अस्मादपराधात् त्वां निपात्य प्रातः सकलान्यपि सत्त्वान्युच्छेत्स्यामि[८] ।"

(५) वारः दिनम् पर्य्याय इति यावत् ।
(६) सृक्कणी ओष्ठप्रान्तौ ।
(७) निःसत्त्वम् जन्तुशून्यम्, एतद्वनस्थितान् सर्व्वानेव जन्तून् हनिष्यामीत्यर्थः ।
(८) उच्छेत्स्यामि विनाशयिष्यामि ।

अथ शशकः प्रणम्य सविनयं प्रोवाच "स्वामिन्, नात्रापराधो मम, न चापरेषां सत्त्वानाम्। श्रूयतां कारणम्"। सिंह आह—"सत्वरं निवेदय, यावन्मम दंष्ट्रान्तर्गतो[९] न भवसि"।

शशक आह "स्वामिन्, समस्तमृगैरद्य मम वारं विज्ञायअहं प्रेषितः। मां तु लघुतरं दृष्ट्वा ते अपरान् पञ्च शशकान् मया सह प्रेषितवन्तः। ततश्चाहमागच्छन् पथि महता केनचिदपरसिंहेन विवरान्निर्गत्य अभिहितः 'रे क्व प्रस्थिताः यूयम्'। मयाभिहितं वयं वनस्वामिनो भासुरकसिंहस्य आहारार्थं समयधर्म्मेण तत्सकाशे गच्छामः।

ततस्तेनाभिहितं मदीयमेतद्वनम्। मया सह समयधर्मेण समस्तैर्मृगैवर्त्तितव्यम्। चौरः स भासुरकः। अथ[१०] सोऽत्र वने राजा, तर्हि पञ्च शशकान् अत्र धृत्वा तमाहूय द्रुतमागच्छ। यः कश्चिदावयोः पराक्रमेण राजा भविष्यति स सर्वानेव मृगान् भक्षयिष्यति। ततोऽहं तेनादिष्ट स्वामिसकाशमागतः। एतत् वेलातिक्रमस्यकारणम्। तदत्र स्वामी प्रमाणम्[११]।

तच्छ्रुत्वा भासुरक आह-"भद्र,यद्येवं सत्वरं दर्शय मे तं चौरसिंहम्। येनाहं मृगकोपं तस्योपरि क्षिप्त्वा[१२]

(९) दंष्ट्रान्तर्गतः दन्तमध्यप्रविष्टः।

(१०) अथ यदि।

(११) तत् तस्मात्, अत्र अस्मिन् विषये, स्वामी प्रभुः प्रमाणं स्वाम्येव कर्त्तव्यमवधारयतु इत्यर्थः।

(१२) जित्वा शमयित्वा इति तात्पर्यम्।

स्वस्थो भवामि"। शशक आह—"आगच्छतु स्वामी"। एवमुक्त्वा असावग्रे प्रस्थितः। ततश्च कश्चित् कूपमासाद्य स भासुरकमाह "स्वामिन्, कस्ते प्रतापं सोढं समर्थः। त्वां दृष्ट्वा दूरत एव स चौरः स्वदुर्गं प्रविष्टः। आगच्छ दर्शयामि"।

तच्छ्रुत्वा भासुरक आह—"भद्र, सत्वरं दर्शय मे दुर्गम्"। तदनु[13] दर्शितस्तेन कूपः। सोऽपि मूर्खः सिंहः कूपमध्ये आत्मनः प्रतिबिम्बं दृष्ट्वा अपरसिंहधिया[14] नादं मुमोच। ततस्तत्प्रतिशब्देन द्विगुणतरो नादः कूपात् समुत्थितः। अथासौ तं नादमाकर्ण्य कोपज्वलितः आत्मानं कूपे क्षिप्त्वा प्राणान् मुमोच। तदा प्रभृति सर्वे मृगा निर्भयास्तत्र वने वसन्ति स्म।

अथ + एकदा = अथैकदा
सर्व + उच्छेदनम् = सर्वोच्छेदनम्
तत् + नूनम् = तन्नूनम्
अनिच्छन् + अपि = अनिच्छन्नपि
लघुकलेवरम् + च + अवलोक्य = लघुकलेवरञ्चावलोक्य
निर्भर्त्सयन् + आह = निर्भर्त्सयन्नाह
सत्वानि + उच्छेत्स्यामि = सत्वान्युच्छेत्स्यामि
विवरात् + निर्गत्य = विवरान्निर्गत्य
समस्तैः + मृगैः + वर्तितव्यम् = समस्तैर्मृगैर्वर्तितव्यम्
तत् + श्रुत्वा = तच्छ्रुत्वा
असौ + अग्रे = असावग्रे
सः + अपि = सोऽपि

( १३ ) तदनु तत्पश्चात्।
( १४ ) अपरसिंहधिया अन्यसिंहबोधेन अन्यं सिंहमवधार्येत्यर्थः।

## वककुलीरकयोः

अस्ति कस्मिंश्चिद्वने महत् सरः। तत्रैको वकः स्थितः। स तु वृद्धभावमुपागतो मत्स्यान् व्यापादयितुमसमर्थः। अथ कदाचिदसौ क्षुत्क्षामः[1] तस्य सरसस्तीरे उपविष्टः अश्रुप्रवाहैर्धरातलम् अभिषिञ्चन् रुरोद।

अथैकः कुलीरको[2] नानाजलचरसमेतः समभ्युपेत्य तस्य दुःखेन दुःखितः सादरमिदमूचे "माम[3], किमद्य त्वया आहारवृत्तिर्नानुष्ठीयते; कथं रुदते ? स प्राह— "वत्स ! सत्यमुपलक्षितं भवता। अहं मत्स्यादः[4] परं मया वैराग्यात् साम्प्रतं प्रायोपवेशनं[5] कृतम्। तेनाहं समीपागतानपि मत्स्यान् न भक्षयामि।

---

(१) क्षुत्क्षामः क्षुधा क्षामः क्षीणः कातर इति यावत्।

(२) कुलीरकः कर्कटः केंकड़ा इति भाषायाम्।

(३) माम मातुल।

(४) मत्स्यादः मत्स्यभक्षकः। मत्स्यान् भक्षयित्वा प्राणयात्रां करोमि इत्यर्थः।

(५) प्रायोपवेशनं प्राणांस्त्यक्ष्यामीति प्रतिज्ञाय आहारपरित्यागः प्रायः तत्र उपवेशनम् प्राणत्यागार्थम् अनशनव्रतावलम्बनमित्यर्थः।

कुलीरकस्तच्छ्रुत्वा प्राह "माम ! किं ते वैराग्यकारणम् ।" स आह-"वत्स ! अहमस्मिन् सरसि जातो, वृद्धिं गतश्च । मया श्रुतं द्वादशवार्षिकी अनावृष्टिः सम्पत्स्यते"।

कुलीरकः प्राह- "कस्मात् श्रुतं भवता"। वक आह-"दैवज्ञमुखात् । एतत् सरः स्वल्पतोयं संवृत्तं शीघ्रं शोषं यास्यति। यैः सह अहं वृद्धिं गतः, सदैव क्रीडितश्च अस्मिन् सरसि शुष्के तोयाभावात्तेषां नाशं द्रष्टुमसमर्थः। तेन दुःखेन एतत् प्रायोपवेशनं मया कृतम्। साम्प्रतं सर्व्वे जलचराः स्वजनैर्गुरुजलाशयेषु नीयन्ते । मकरजलहस्तिप्रभृतयस्तु स्वयमेव गच्छन्ति । अत्र पुनः सरसि ये जलचराः ते निश्चिन्तास्तिष्ठन्ति। अथ स तदाकर्ण्य अन्येषां जलचराणां निवेदयामास । ततस्ते सर्व्वे भयव्याकुलमनसो मत्स्यकच्छपप्रभृतयः आगत्य तं वकं पप्रच्छु. "माम, अस्ति कश्चिदुपायो येन अस्माकं रक्षा भवति। वक आह-"अस्त्यस्य जलाशयस्य नातिदूरे प्रभूतजलं महत् सरः। यत् चतुर्विंशत्यपि वर्षैरवृष्टे पर्ज्जन्ये न शुष्यति। तत् यदि मम पृष्ठं कश्चिदारोहति तमहं तत्र नयामि।

---

(६) द्वादशवार्षिकी द्वादशवर्षव्यापिनी।
(७) गुरुषु महत्सु ह्रदसरोवरप्रभृतिजलाशयेषु ।
(८) पर्ज्जन्ये मेघे।

अथ ते जलचरा विश्वासमापन्नाः तातमातुलभ्रातरिति ब्रुवाणाः अहं पूर्वमहं पूर्वमिति वदन्तः समन्तात् परितस्थुः। सोऽपि दुष्टाशयः तान् क्रमेण पृष्ठमारोप्य जलाशयस्य नातिदूरे स्थितां विस्तीर्णां शिलां समासाद्य तस्यामाक्षिप्य स्वेच्छया भक्षयितुम् आरेभे। एवं स जलचराणां मिथ्यावार्त्ताकथनैः मनांसि नित्यमेव रंजयन् आहारवृत्तिमकरोत्। अथैकस्मिन् दिवसे स कुलीरकेणोक्तः- "माम, मया सह ते प्रथमः स्नेहसम्भाषः[९] संजातः। किं मां परित्यज्य अन्यान् नयसि? तदद्य मम प्राणत्राणं कुरु"। तदाकर्ण्य स दुष्टाशयश्चिन्तितवान् तृप्तोऽहं मत्स्यमांसानाम्। अद्य तावत् कुलीरकमिमं भक्षयामि। ततोऽसौ वाढमित्युक्त्वा[१०] तं पृष्ठे निधाय तां वध्यशिलामुद्दिश्य[११] प्रस्थितः।

कुलीरकस्तु दूरादेव अस्थिपर्व्वतं शिलासमीपे समुद्वीक्ष्य मत्स्यास्थीनि परिज्ञाय तमपृच्छत् "माम, कथय कियद्दूरे स जलाशयः। त्वं मदीयभारेणातिश्रान्तः। स तु मन्दधीः[१२] जलचरोऽयं न स्थले प्रभवति[१३] इति मत्वा

(९) स्नेहसम्भाषः स्नेहसहित आलापः।

(१०) वाढमित्युक्त्वा एवमस्तु इति कथयित्वा, अङ्गीकृत्येति यावत्।

(११) वध्यशिला वधसाधनं पाषाणं, यस्यां शिलायां प्रक्षिप्य वधं साधयतीत्यर्थः।

(१२) मन्दधीः मूढः निर्बुद्धिरिति यावत्।

(१३) प्रभवति शक्नोति।

सस्मितमिदमाह "कुलीरक, कुतोऽन्यो जलाशयः; मम प्राणयात्रेयम् । तस्मात् स्मर्य्यतामभीष्टदेवता । त्वामपि अस्यां शिलायां प्रक्षिप्य भक्षयामि" । इत्युक्तवति तस्मिन् कुलीरको दशनसन्दंशेन[१४] तस्य वकस्य मृणालधवलां मृदुग्रीवां चकर्त्त[१५] । वकश्च पञ्चत्वं गतः ।

अथ कुलीरकस्तां वकग्रीवां समादाय शनैः शनैः तं जलाशयमाससाद । ततः स सर्व्वैरेव जलचरैः पृष्टः "भोः कुलीरक "किं प्रतिनिवृत्तस्त्वम् । किम् अमङ्गलकारणम् किंचित् संजातम् ? स च तव मातुलको न समायातः । किं स चिरयति[१६] । वयं सर्व्वेऽपि समुत्सुकाः कृतेक्षणाः[१७] तिष्ठामः ।"

एवं तैरभिहिते कुलीरकः विहस्य प्रोवाच "मूर्खाः सर्व्वे जलचराः तेन मिथ्यावादिना वंचयित्वा नातिदूरे शिलातले प्रक्षिप्य भक्षिताः । मया तु तस्य विश्वासघातकस्य अभिप्रायं ज्ञात्वा ग्रीवेयं तस्यानीता । तदलमुद्वेगेन । अधुना सर्व्वेषां जलचराणां क्षेमं भविष्यति" ।

अस्ति + अस्य = अस्त्यस्य
वर्षैः + अवृष्टे + वर्षैरवृष्टे
विश्वासम् + आपन्नाः = विश्वासमापन्नाः
प्राणयात्रा + इयम् = प्राणायात्रेयम्

---

(१४) सन्दंशः लोहनिर्म्मितो यन्त्रविशेषः संडासी इति भाषायाम् ।
(१५) चकर्त्त छिन्नवान् ।
(१६) चिरयति विलम्बते ।
(१७) कृतेक्षणाः प्रतीक्षमाणा इति यावत् ।

# सिंहशृगालादीनाम्

कस्मिंश्चिद्वने चण्डरवो नाम शृगालः प्रतिवसति स्म। स कदाचित् क्षुधाविष्टो नगरान्तरे प्रविष्टः। अथ नगरवासिनः सारमेयाः[1] तमवलोक्य तीक्ष्णदंष्ट्राग्रैः भक्षयितुमारब्धवन्तः। स प्राणभयात् पलायमानः प्रत्यासन्नं रजकगृहं प्रविष्टः। तत्र नीलीरसपूर्णं महाभाण्डं सज्जीकृतमासीत्। स तस्मिन् पपात। अथ तस्मान्निष्क्रान्तोऽसौ नीलवर्णः संजातः। ततः सर्व्वे ते सारमेयाः तं शृगालमजानन्तो यथाभीष्टां दिशं जग्मुः। चण्डरवोऽपि तदन्तरम्[2] आसाद्य काननाभिमुखं प्रतस्थे।

अथ तमपूर्व्वं सत्वमवलोक्य सर्व्वे सिंहव्याघ्रवृक[3] प्रभृतयोऽरण्यनिवासिनो भयव्याकुलमनसः समन्तात् पलायनक्रियां कुर्व्वन्ति स्म, कथयन्ति स्म च,—"अहो अपूर्व्वमेतत् सत्त्वं कुतोऽप्यागतम्। न विज्ञायते कीदृगस्य चेष्टितं पौरुषञ्च। तद्दूरतरं गच्छामः"।

---

(१) सरमा कुक्कुरी तस्याः अपत्यं पुमान् सारमेयः कुक्कुरः

(२) अन्तरम् अवकाशम्।

(३) वृकः क्षुद्रकायो भेड़ियेति भाषायां व्याघ्रजातिविशेषः।

चण्डरवस्तु तान् भयव्याकुलितान् विज्ञाय इदम् आह—"भो भोः श्वापदाः[४], किं यूयं मां दृष्ट्वा सन्त्रस्ताः व्रजथ। न भेतव्यं, न भेतव्यम्। अहमद्य ब्रह्मणा स्वयमेव आहूयाभिहितः, यत् श्वापदानां मध्ये कश्चित् राजा नास्ति। त्वं मयाद्य श्वापदराज्येऽभिषिक्तः। अतो क्षितितले गत्वा तान् सर्व्वान् परिपालय। ततोऽहम् अत्रागतः। अहं ककुद्रुमो नाम त्रैलोक्ये श्वापदराजः सञ्जातः"।

तच्छ्रुत्वा ते श्वापदाः सिंहपुरःसराः[५] "स्वामिन् प्रभो समादिशेति" वदन्तस्तं परिवव्रुः[६]।

ततस्तेन सिंहाय अमात्यपदवी प्रदत्ता, व्याघ्राय शय्यापालत्वम्, द्वीपिने ताम्बूलाधिकारः, करिणे प्रतीहारित्वम्[७], वानराय छत्रधरत्वम्। ये च आत्मीयजात्याः, तैः सह स आलापमात्रमपि न करोति। सर्व्वे शृगालाः अर्धचन्द्रं दत्त्वा निःसारिताः।

एवं स राज्यकर्मणि वर्त्तते। ते च सिंहादयो मृगान् व्यापाद्य तस्य पुरतः प्रक्षिपन्ति। सोऽपि प्रभुधर्म्मेण[८] सर्व्वेषां[९] विभज्य प्रयच्छति।

---

(४) श्वापदाः हिंस्रजन्तवः।
(५) सिंहपुरःसराः सिंहप्रभृतयः।
(६) परिवव्रुः वेष्टितवन्तः।
(७) प्रतीहारित्वं द्वारपालत्वम्।
(८) प्रभुधर्म्मेण राजधर्ममनुसृत्येति यावत्।
(९) सर्व्वेषां सर्व्वेभ्यः। सम्बन्धविवक्षया षष्ठी।

एवं गच्छति काले, कदाचित् तेन दूरदेशे शब्दायमानस्य शृगालवृन्दस्य[10] कोलाहलोऽश्रावि। तेषां शब्दं श्रुत्वा पुलकिततनुः आनन्दपरिपूर्णः स उत्थाय तारस्वरेण[11] विरोतुमारब्धवान्।

अथ ते सिंहादयः तस्य स्वरमाकर्ण्य तं शृगालोऽयमिति ज्ञात्वा सलज्जम् अधोमुखाः क्षणमेकं स्थिताः। ततो मिथः[12] प्रोचुः—"भो वाहिता[13] वयम् अनेन क्षुद्र-शृगालकेन। तद्बध्यतां, वध्यतामयम्"। सोऽपि तदाकर्ण्य पलायितुमिच्छन् सिंहादिभिः खण्डशः कृतः।

---

तस्मात् + निष्क्रान्तः असौ = तस्मान्निष्क्रान्तोऽसौ
कानन + अभिमुखम् = काननाभिमुखम्
कीदृक् + अस्य = कीदृगस्य

---

(१०) शृगालवृन्दस्य शृगालसमूहस्य।
(११) तारस्वरेण उच्चस्वरेण
(१२) मिथः रहसि, शृगालस्य परोक्षमित्यर्थः।
(१३) वाहिताः भृत्यभावेन कर्म्मकारिताः।

# सिंहदासेरकयोः ।

कस्मिंश्चिद्वने मदोत्कटो नाम सिंहः प्रतिवसति। तस्य च अनुचरा द्वीपिवायसगोमायवः[1] सन्ति। अथ कदाचित्तैरितस्ततो भ्रमद्भिः सार्थभ्रष्टः[2] क्रथनको नाम उष्ट्रो दृष्टः । सिंह आह—"अहो अपूर्व्वमिदं सत्त्वम्। ज्ञायतां किम् एतदारण्यम् उत ग्राम्यमिति"। तच्छ्रुत्वा वायस आह "भोः स्वामिन्, ग्राम्योऽयम् उष्ट्रनामा जीव-विशेषस्तव भोज्यः, तत् व्यापाद्यतामयम्" सिंह आह "नाहं गृहागतं हन्मि। तदभयप्रदानं दत्त्वा मत्सकाश-मानीयताम् येन अभ्यागमनकारणं पृच्छामि"।

अथासौ सर्व्वैरभयप्रदानं दत्त्वा मदोत्कटस्य सकाशमानीतः। प्रणम्योपविष्टश्च स आत्मवृत्तान्तं सर्व्वं निवेदितवान्। सिंहेनोक्तं—"भोः क्रथनक, मा त्वं ग्रामं गत्वा भूयोऽपि भारोद्वहन कष्टभागी भूयाः। अत्रैव अरण्ये निःशङ्कः शष्पाणि[3] भक्षयन् मया सह वस"।

---

(१) द्वीपी व्याघ्रः, वायसः काकः, गोमायुः शृगालः।

(२) सार्थभ्रष्टः यूथात् विश्लिष्टः।

(३) शष्पाणि नवतृणानि।

सोऽपि तथेत्युक्त्वा तेषां मध्ये विचरन् अकुतोभयः सुखेनास्ते।

अथैकदा मदोत्कटस्य अरण्यचारिणा महागजेन सह युद्धमभूत्। तत्र तस्य गजदन्तप्रहारैर्महती व्यथा सञ्जाता। स तु कथमपि न प्राणैर्वियुक्तः परं शरीरासामर्थ्यात् न पदमपि चलितुं शक्नोति। ते च सर्व्वे काकादयः क्षुधाविष्टाः परं दुःखं भेजुः। अथ तान् सिंहः प्राह—"भो, अन्विष्यतां कुत्रचित् किञ्चित् सत्त्वम्। येनाहम् एतामपि दशां प्राप्तः तत् हत्वा युष्माकं भोजनं सम्पादयामि"।

ततस्ते चत्वारोऽपि भ्रमितुमारब्धवन्तः परं न किंचित् सत्त्वं ददृशुः। अथ वायसशृगालौ परस्परं मन्त्रयतः स्म। शृगाल आह—"भो वायस, किं प्रभूतभ्रान्तेन? योऽस्माकं प्रभोर्विश्वस्तः क्रथनकस्तिष्ठति तं हत्वा सर्व्वपरिवारस्यप्राणयात्रां कुर्म्मः"। वायस आह—"भो युक्तमुक्तं भवता। परं स्वामिना तस्याभयं दत्तम्,तेन अवध्योऽयम्"। शृगाल आह—"भो वायस, अहं स्वामिने विज्ञाप्य तथा करिष्ये यथा स्वामी तस्य वधं करिष्यति। तिष्ठन्तु भवन्तोऽत्रैव यावदहं गृहं गत्वा प्रभोराज्ञां गृहीत्वा आगच्छामि"। एवमभिधाय शृगालः सत्वरं सिंहमुद्दिश्य प्रस्थितः।

अथासौ सिंहमासाद्य इदमाह—"स्वामिन्, समस्तं वनं भ्रान्त्वा समागता वयम्। परं न किंचित् सत्त्वं

(४) प्रभूतभ्रान्तेन बहुभ्रमणेन।

समासादितम् । तत् किं कुर्म्मो वयम् । साम्प्रतं बुभुक्षया पदमेकमपि चलितुं न शक्ताः । देवोऽपि पथ्याशी[५] वर्त्तते । तद् यदि देवस्यादेशो भवति तदा क्रथनकपिशितेन[६] अत्र पथ्यक्रिया क्रियते" ।

सिंहस्तु तस्य तद्दारुणं वचनमाकर्ण्य सकोपम् इदमाह—"धिक् धिक्, पापाधम, यद्येवं भूयो वदसि त्वां तत्क्षणमेव हनिष्यामि । मया तस्याभयं प्रदत्तम् । तत् कथं स्वयमेव तं व्यापादयामि" । तच्छ्रुत्वा शृगाल आह- "स्वामिन् यदि अभयप्रदानं दत्त्वा वधः क्रियते, तदा ते दोषो भवति । यदि पुनः स देवपादानां भक्त्या आत्मनो जीवितं प्रयच्छति तदा तत्र न दोषः । तद्यदि स स्वयमेव आत्मानं वधाय नियोजयति[७] तदासौ वध्यः । अन्यथा अस्माकं मध्यादेकतमो वध्यः । देवपादाः पथ्याशिनः क्षुधानिरोधात् अन्त्यां दशां[८] यास्यन्ति । तत् किमेतैः प्राणैरस्माकं, यदि ते स्वाम्यर्थे न यान्ति । यदि स्वामिपादानां किञ्चिदनिष्टं भविष्यति, तदस्माभिरपि वह्निप्रवेशः कार्य्यः" ।

एतदाकर्ण्य मदोत्कट आह--"यद्येवं, कुरुष्व यत्ते रोचते" । तच्छ्रुत्वा शृगालः सत्वरं गत्वा तानुवाच—"भो

(५) पथ्याशी पथ्यभोजी ।
(६) क्रथनकपिशितेन क्रथनकस्य मांसेन ।
(७) नियोजयति नियुक्तं करोति समर्पयतीत्यर्थ.
(८) अन्त्यां दशां मृत्युम् ।

भोः स्वामिनो महती[9] अवस्था वर्त्तते। असौ नासिकान्त-प्राप्तजीवितम्[10] तिष्ठति। तत् किं पर्य्यटितेन। तेन विना कोऽस्मान् अत्र वने रक्षिष्यति। तद्गत्वा क्षुधारोगात् परलोकं प्रस्थितस्य[11] तस्यात्मशरीरदानं कुर्म्मः। येन स्वामिप्रसादस्यानृणतां गच्छामः"। तदनन्तरं ते सर्व्वे गत्वा बाष्पपूरितदृशो मदोत्कटं प्रणम्योपविष्टाः। तान् दृष्ट्वा मदोत्कटः प्राह–"भोः प्राप्तं, दृष्टं वा किंचित् सत्वम्"।

अथ तेषां मध्यात् काकः प्रोवाच–"स्वामिन्, वयं तावत् सर्व्वत्रैव पर्य्यटिताः। परं न किंचित् प्राप्तं, दृष्टं वा सत्त्वम्। तदद्य मां भक्षयित्वा प्राणान् धारयतु स्वामी, येन देवस्य श्वसनं[12] भवति, मम च स्वर्गप्राप्तिः।

तच्छ्रुत्वा शृगाल आह–"भोः स्वल्पकायो भवान्, तव भक्षणात् स्वामिनः प्राणयात्रा तावन्न भवति। दोषश्च महान्[13] समुत्पद्यते। तद्दर्शिता भवता स्वामिभक्तिः,

---

(९) महती परमा चरमेति यावत्।

(१०) नासिकान्तप्राप्तजीवितः नासिकायाः अन्ते अग्रे प्राप्तम् उपस्थितं जीवितमस्य, स्वामिनो मृत्युरुपस्थित इत्यर्थः।

(११) प्रस्थितस्य प्रतिष्ठमानस्य गन्तुम् उद्यतस्य इतियावत्।

(१२) श्वसनं जीवनं प्राणरक्षेति यावत्।

(१३) निषिद्धकाकमांसभक्षणजनितः।

लब्धश्चानृण्यं भर्तृपिण्डस्य,[१४] प्राप्तश्च उभयोर्लोकयोः साधुवादः। तदपसराग्रतः येनाहमपि स्वामिनं विज्ञापयामि। तथानुष्ठिते, सादरं शृगालः प्रणम्य प्रोवाच "स्वामिन् अद्य मदीयेन कायेन प्राणधारणं कृत्वा मम उभयलोकप्राप्तिं कुरु।

तच्छ्रुत्वा द्वीपी प्राह—"भोः साधूक्तं भवता। परं भवानपि स्वल्पकायः। अपरश्च नखायुधत्वादभक्ष्यो[१५] भवान्। दर्शितं त्वया आत्मनः कौलीन्यम्[१६]। तदपसरतु भवानग्रतः येनाहमपि स्वप्रभुं प्रसादयामि"। तथानुष्ठिते द्वीपी प्रणम्य मदोत्कटमाह—"स्वामिन् क्रियतामद्य मम प्राणैः प्राणयात्रा। दीयतां मे स्वर्गे ऽक्षयो वासः। विस्तीर्य्यतां पृथ्वीतले प्रभूतं यशः। नात्र विकल्पः[१७] कार्य्यः"।

सर्व्वमेतदाकर्ण्य क्रथनकश्चिन्तयामास एतैस्तावत शोभनानि वाक्यानि प्रोक्तानि। न चैकोऽपि स्वामिना

---

(१४) भर्तृपिण्डस्य प्रभुदत्तस्य अन्नस्य।

(१५) नखायुधत्वादभक्ष्यः नखम् आयुधम् अस्त्रं येषां ते नखायुधा शृगालकुक्कुरादयःश्वापदाः ते च शास्त्रे ऽभक्ष्यतया निर्दिष्टाः।

(१६) कौलीन्यम् सत्कुलजातत्वम्।

(१७) विकल्पः संशयः।

विनाशितः। प्राप्तकालं विज्ञापयामि। विचिन्त्य स प्रोवाच- "भो युक्तमुक्तं भवता। परं भवानपि नखायुधः। तत् कथं भवन्तमपि स्वामी भक्षयतु। तदपसरतु भवान्, येनाहं स्वामिनं विज्ञापयामि"। तथानुष्ठिते क्रथनकोऽग्रे स्थित्वा प्रणम्योवाच "स्वामिन् एते तावदभक्ष्या भवताम्। तन्मम प्राणैः प्राणयात्रा विधीयताम् येन मे उभयलोक-प्राप्तिर्भवतु"।

एवमभिहिते सिंहानुज्ञाताभ्यां शार्दूलशृगालाभ्यां विदारितकुक्षिः काकेनोत्पाटितचक्षुः क्रथनकः प्राणान् अत्याक्षीत्।

तैः + इतः + ततः = तैरितस्ततः
एतत् + आरण्यम् = एतदारण्यम्
प्रणम्य + उपविष्टः + च = प्रणम्योपविष्टश्च
भार + उद्वहनकष्टभागी = भारोद्वहनकष्टभागी
तत् + दारुणम् = तद्दारुणम्
स्वामि + अर्थे = स्वाम्यर्थे
सर्वान् + तान् + उवाच = सर्वांस्तानुवाच
लब्धं + च + आनृण्यम् = लब्धश्चानृण्यम्
साधु + उक्तम् = साधूक्तम्
प्रणम्य + उवाच = प्रणम्योवाच
काकेन + उत्पाटितचक्षुः = काकेनोत्पाटितचक्षुः

---

(१८) प्राप्तकालं प्राप्तः कालोऽस्य तत् विज्ञापयामीति क्रियाया विशेषणम्।

# त्रयाणां मत्स्यानाम्

कस्मिंश्चिज्जलाशये अनागतविधाता प्रत्युत्पन्नमतिः यद्भविष्यश्चेति त्रयो मत्स्याः प्रतिवसन्ति स्म। अथ कदाचित् तं जलाशयं दृष्ट्वा गच्छद्भिर्मत्स्यजीविभिरभिहितम् "अहो बहुमत्स्योऽयं ह्रदः, कदाचिदपि न अस्माभिरन्वेषितः। अद्य तावदाहारवृत्तिः संजाता, सन्ध्यासमयश्च संवृत्तः[2], तत् प्रभाते अत्रागन्तव्यमिति निश्चयः"।

अथ तेषां तत् कुलिशपातोपमं[3] वचः समाकर्ण्य अनागतविधाता सर्वान् मत्स्यानाहूय इदमूचे[1], "हंहो[4]

(१) अनागतविधाता अनागतस्य अनुपस्थितस्य सम्भावितस्येति यावत् विधाता प्रतिकारकः; यः अनिष्टं सम्भाव्य पूर्वमेव तत्प्रतिकारं चिन्तयति। प्रत्युत्पन्नमतिः प्रत्युत्पन्ना कार्य्यकाले उपस्थिता मतिः कर्त्तव्यावधारणशक्तिर्यस्य, विपदि अव्याकुलेन मनसा प्रतिकारचिन्तनसमर्थः। यद्भविष्यः यत् भविष्यं तत् भवत्येव न तस्य प्रतिविधानं कर्त्तुं शक्यते जीवैरिति निश्चित्य उपायचिन्तनविमुखः।

(२) संवृत्तः उपस्थित इति यावत्।

(३) कुलिशपातोपमं वज्रपातसदृशम्।

(४) हंहो भोः।

श्रुतं भवद्भिः यत् मत्स्यजीविभिरभिहितम्। तद्रात्रावेव गम्यतामन्यत् सरः, नूनं प्रभातसमये ते मत्स्यजीविनोऽत्र समागत्य मत्स्यसंक्षयं करिष्यन्ति,एतन्मम मनसिवर्त्तते। तन्न युक्तं साम्प्रतं क्षणमपि अत्रावस्थातुम्"। एतदाकर्ण्य प्रत्युत्पन्नमतिः प्राह—"भोः सत्यमभिहितं भवता। ममापि अभीष्टमेतत्। तदन्यत्र गम्यताम्"।

अथ तत् समाकर्ण्य उच्चैर्विहस्य यद्भविष्यः प्राह-"हंहो न सम्यक् मन्त्रितं भवद्भ्याम्। किं तेषां वाङ्मा-मात्रेण पितृपैतामहिकमेतत् सरस्त्यक्तं युज्यते। यदि आयुःक्षयोऽस्ति तदा अन्यत्र गतानामपि मृत्युर्भविष्यति। तदहं न यास्यामि। भवद्भ्यान्तु यद्रोचते तत् क्रियताम्।

एवं तस्य तं निश्चयं ज्ञात्वा अनागतविधाता प्रत्युत्पन्नमतिश्च निष्क्रान्तौ सह परिजनेन। अथ प्रभाते तैर्मत्स्यजीविभिः जालैस्तं जलाशयमालोड्य यद्भविष्येण सह तत् सरो निर्मत्स्यतां नीतम्।

कुलिशपात + उपमम् = कुलिशपातोपमम्

तत् + रात्रौ + एव = तद्रात्रावेव

---

( ५ ) निश्चयं सिद्धान्तम्।

## धर्म्मबुद्धिपापबुद्ध्योः

कस्मिंश्चिदधिष्ठाने धर्म्मबुद्धिः पापबुद्धिश्च द्वे मित्रे प्रतिवसतः स्म। कदाचित् पापबुद्धिना चिन्तितम् "अहं तावत् मूर्खो दरिद्रश्च। तदेनं धर्म्मबुद्धिमादाय देशान्तरं गत्वा अस्याश्रयेण अर्थोपार्ज्जनं कृत्वा एनमपि वञ्चयित्वा सुखी भवामि"। अथ अन्यस्मिन्नहनि स धर्म्मबुद्धिं प्राह—"भो मित्र, देशान्तरमदृष्ट्वा वार्द्धके शिशुजनस्य कां वार्त्तां कथयिष्यसि।

तदाकर्ण्य धर्म्मबुद्धिः प्रहृष्टमना गुरुजनानुज्ञातः शुभेऽहनि तेन सह देशान्तरं प्रस्थितः। तत्र धर्म्मबुद्धिप्रभावेण पापबुद्धिनापि प्रभूतं वित्तमासादितम्। ततश्च द्वावपि तौ प्रभूतं द्रव्यमर्ज्जयित्वा प्रहृष्टौ स्वगृहं प्रति औत्सुक्येन निवृत्तौ।

अथ स्वस्थानसमीपवर्त्तिना पापबुद्धिना धर्म्मबुद्धिरभिहितः-"भद्र, न सर्व्वम् एतद्वित्तं गृहं नेतुं युज्यते। ज्ञातयो बान्धवाश्च प्रार्थयिष्यन्ते। तदस्मिन् गहने वने क्वापि भूमौ निधाय किञ्चिन्मात्रमादाय गृहं प्रविशावः। भूयःप्रयोजने सञ्जाते समेत्य अस्मात् स्थानान्नेष्यावः"।

---

(१) अधिष्ठाने नगरे।

तदाकर्ण्य धर्म्मबुद्धिराह-"भद्र, तर्हि एवं क्रियताम्"। तथानुष्ठिते, द्वावपि तौ स्वगृहं गत्वा सुखेन स्थितवन्तौ।

एकदा पापबुद्धिर्निशीथे अटवीं गत्वा तत् सर्वं वित्तं समादाय गर्त्तं पूरयित्वा स्वभवनमाजगाम। अथ अन्येद्युः पापबुद्धिः धर्म्मबुद्धिं समेत्य प्रोवाच "सखे बहुकुटुम्बौ[2] आवां, वित्ताभावात् सीदावः[3], तद्गत्वा तत्स्थाने किंचिन्मात्रं धनमानयावः। सोऽब्रवीत् "भद्र एवं क्रियताम्"।



अथ तौ तत् स्थानं यावत् खनतः तावद्रिक्तं भाण्डं दृष्टवन्तौ। अत्रान्तरे[4] पापबुद्धिः आत्मशिरस्ताडयन् प्रोवाच—"भो धर्म्मबुद्धे त्वया हृतम् एतद्धनं नान्येन, यतो भूयोऽपि गर्त्तापूरणं कृतम्। तत् प्रयच्छ मे तस्यार्द्धम् अन्यथाहं राजकुले निवेदयिष्यामि। स आह "भो दुरात्मन् नैतत्वद। धर्म्मबुद्धिः खल्वहं, न एतच्चौरकर्म्म करोमि। एवं द्वावपि तौ विवदमानौ धर्म्माधिकरणं[5] गत्वा प्रोचतुः परस्परं दूषयन्तौ।

---

(२) बहुकुटुम्बौ बहुपोष्यवर्गौ।

(३) सीदावः अवसादं प्राप्नुवः क्लेशं सहावहे इति यावत्।

(४) अत्रान्तरे अस्मिन् समये।

(५) धर्माधिकरणं व्यवहारदर्शनस्थानं विचारालयमिति यावत्।

अथ तौ धर्म्माधिकरणाधिष्ठितैः पुरुषैर्दिव्यार्थं यावन्नियोजितौ तावत् पापबुद्धिराह—"हंहो न सम्यक् दृष्टोऽयं न्यायः। अत्र विषये वनदेवता मम साक्षीभूता तिष्ठति। सैव आवयोरेकतरं चौरं वा साधुं वा करिष्यति"। अथ तैः सर्वैरभिहितं भो युक्तमुक्तं भवता। अस्माकमपि अत्र विषये महत् कुतूहलं वर्त्तते। प्रत्यूषसमये युवाभ्यां मस्माभिः सह तत्र वनोद्देशे गन्तव्यम्"।

एतस्मिन्नन्तरे पापबुद्धिर्गृहं गत्वा स्वजनकमुवाच- "तात ! प्रभूतोऽयं मया अर्थो धर्म्मबुद्धेश्चोरितः, स च तव वचनेन परिणतिं गच्छति, अन्यथा अस्माकं प्राणैः सह यास्यति। स आह—"वत्स, तत् वद द्रुतं यत् कथयित्वा स्थिरतां नयामि"। पापबुद्धिः प्राह—"तात, अस्ति तस्मिन् प्रदेशे महाशमी। तस्यां महत् कोटरमस्ति। तत्र त्वं साम्प्रतमेव प्रविश। ततः प्रभाते यदाहं सत्यश्रावणं करोमि तदा त्वया वाच्यं धर्म्मबुद्धिश्चौर इति"।

---

(६) धर्म्माधिकरणाधिष्ठितैः धर्माधिकरणनियुक्तैः।

(७) न्यायः विचारः।

(८) परिणतिं परिपाकम्

(९) सत्यश्रावणं, सत्यं वदसि चेत् स्वर्गमवाप्स्यासि अनृतं वदसि चेत् नरकमवाप्स्यसि एवं प्रकारेण समवेतान् साक्षिणः साक्ष्यकथनात् पूर्वं राजपुरुषयो यत् श्रावयन्ति तत् सत्यश्रावणम्।

तथानुष्ठिते प्रत्यूषे स्नात्वा पापबुद्धिःशुभ्रवासा धर्म्मबुद्धिपुरः सरो धर्म्माधिकरणिकैः[११] सह तां शमीमभ्येत्य तारस्वरेण[१२] प्रोवाच-"भगवति वनदेवते आवयोर्मध्ये यश्चौरः तं कथय[१३]"। अथ पापबुद्धिपिता शमी कोटरस्थःप्रोवाच-"भो शृणुत,शृणुत,धर्म्मबुद्धिना अपहृतम् एतद्धनम्"। एतदाकर्ण्य सर्वे ते राजपुरुषा विस्मयोत्फुल्ललोचना अभूवन्। धर्म्मबुद्धिना तु तच्छमीकोटरं वह्निभोज्यद्रव्यैः[१४] परिवेष्टय वह्निना सन्दीपीतम्।

अथ ज्वलति तस्मिन्, अर्द्धदग्धशरीरः स्फुटिताक्षः[१५] करुणं परिदेवयन्[१६] पापबुद्धिपिता शमीकोटरान्निश्चक्राम। ततस्तैः सर्वैः पृष्टं-"भोः किमिदम्"। इत्युक्ते स

---

(१०) शुभ्रवासाः शुद्धवस्त्राः

(११) धर्म्माधिकरणिकैः धर्म्माधिकारनियुक्तैः।

(१२) तारस्वरेण उच्चैःस्वरेण।

(१३) तं कथय तं प्रकाशय।

(१४) वह्निभोज्यद्रव्यैः अग्न्युद्दीपकैर्वस्तुभिः।

(१५) स्फुटिताक्षः स्फुटितनयनः।

(१६) परिदेवयन् विलपन्।

पापबुद्धिविचेष्टितं सर्वमिदं तेषां निवेद्य उपरतः[१७]। अथ पापबुद्धिं शमीशाखायां प्रविलम्ब्य[१८] राजपुरुषा धर्मबुद्धिं प्रशस्य इदमूचुः । अहो साधु इदमुच्यते—

"उपायं चिन्तयेत् प्राज्ञस्तथापायश्च चिन्तयेत्" ।

अनेन पापबुद्धिना उपायश्चिन्तितो नापायः । अतः तत्फलं प्राप्तम् ।

| | |
|---|---|
| अर्थ+उपार्ज्जनम् = अर्थोपार्ज्जम् | एतत्+धनम् = एतद्धनम् |
| अन्यस्मिन्+अहनि = अन्यस्मिन्नहनि | गर्त्त+आपूरणम् = गर्तापूर्णम् |
| स्थानात्+नेष्यावः = स्थानान्नेष्यावः | खलु+अहम् = खल्वहम् |
| पापबुद्धिः+निशीथे = पापबुद्धिर्निशीथे | सा+एव = सैव |
| तावत्+रिक्तम् = तावद्रिक्तम् | वन+उद्देशे = वनोद्देशे |

एतस्मिन्+अन्तरे = एतस्मिन्नन्तरे

विस्मय+उत्फुल्ललोचनाः = विस्मयोत्फुलोचनाः

तत्+शमीकोटरम् = तच्छमीकोटरम्

स्फुटित+अन्तः = स्फुटितान्तः

प्राज्ञः+तथा अपायं+च = प्राज्ञस्तथापायश्च

---

(१७) उपरतः मृतः ।

(१८) प्रविलम्ब्य रज्वाबद्ध्वा, लम्बयित्वा ।

# त्रयाणां धूर्तानाम्

कस्मिंश्चिदधिष्ठाने मित्रशर्म्मा नाम ब्राह्मण प्रतिवसतिस्म। स कदाचित् माघमासे पशुप्रार्थनाय ग्रामान्तरं गतः। तत्र तेन कश्चिद् यजमानो याचितः "भो-यजमान, आगामिन्याम् अमावस्यायां यक्ष्यामि यज्ञं[1], तद् देहि मे पशुम् एकम्"। अथ तेन तस्य शास्त्रोक्तः पीवरतनुः[2] पशुः प्रदत्तः। सोऽपि तं समर्थम् इतश्चेतश्च गच्छन्तम् अवलोक्य स्कन्धे कृत्वा सत्वरं स्वपुराभिमुखः प्रतस्थे।

अथ तस्य गच्छतो मार्गे त्रयो धूर्त्ताः सम्मुखा बभूवुः। तैश्च तादृशं पीवरतनं पशुं स्कन्धम् आरूढम् अवलोक्य मिथोऽभिहितम्-"अहो अस्य पशोर्भक्षणात् अद्यतनो हिमपातो व्यर्थतां नीयते। तदेनं वञ्चयित्वा पशुम् आदाय शीतत्राणं[3] कुर्म्मः"।

अथ तेषाम् एकतमो वेशपरिवर्त्तनं विधाय सम्मुखो भूत्वा तम् उवाच भोः भोः किम् एवं जनविरुद्धं हास्य-

---

(१) यज्ञं यक्ष्यामि यज्ञं करिष्यमि।
(२) पीवरतनुः स्थूलकायः।
(३) शीतत्राणं शीतात् आत्मरक्षणम्।

कार्य्यम् अनुष्ठीयते यद् एष सारमेयः[4] अपवित्रः स्कन्धा-रूढ़ो नीयते। ततश्च तेन कोपाभिभूतेन अभिहितम् "अहो किम् अन्धो भवान् यत् पशुं सारमेयं प्रतिपाद-यति[5]। सोऽब्रवीत्- "ब्रह्मन् कोपस्त्वया न कार्य्यः, यथेच्छं गम्यताम्"।

अथ यावत् किञ्चिद् अध्वान्तरं गच्छति तावत् द्वितीयो धूर्त्तः सम्मुखः समुपेत्य तम् उवाच-"भो ब्रह्मन् कष्टं कष्टम्। यद्यपि वल्लभोऽयं ते सारमेयः तथापि स्कन्धम् आरोपयितुं न युज्यते। अथासौ सकोपम् इदम् आह-"भोः किम् अन्धो भवान् यत् पशुं सारमेयं वदति। सोऽब्रवीत्-"भगवन् मा कोपं कुरु। अज्ञानात् मया अभिहितम् ।त्वम् आत्मरुचितं समाचर।

अथ यावद् स्तोकं वर्त्मान्तरं गच्छति तावत् तृतीयो ऽन्यवेशधारी धूर्त्तः सम्मुखः समुपेत्य तम् उवाच-"भोः अयुक्तम् एतत् यत् त्वं सारमेयं स्कन्धाधिरूढं नयसि। तत त्यज्यताम् एषः, यावद् अन्यः कश्चिन् न पश्यति। अथासौ बहु विमृश्य तं पशुं सारमेयम् एव मन्यमानो भयाद् भूमौ प्रक्षिप्य स्वगृहम् उद्दिश्य पलायितः। ततस् ते त्रयो मिलित्वा तं पशुम् आदाय प्रतस्थिरे।

शास्त्र + उक्तः = शास्त्रोक्तः

स्कन्ध + आरूढ़ः = स्कन्धारूढ़ः

---

(४) सरमा कुक्कुरी तस्या अपत्यं पुमान् सारमेयः कुक्कुरः।

(५) प्रतिपादयति प्रतिपन्नं करोति।

# ब्राह्मणभुजङ्गमयोः

अस्ति कस्मिंश्चिद् अधिष्ठाने हरिदत्तो नाम ब्राह्मणः। तस्य च कृषिं कुर्व्वतः सदैव निष्फलः कालोऽतिवर्त्तते। अथ एकस्मिन् दिवसे स ब्राह्मणो घर्म्मार्त्त स्वक्षेत्रमध्ये वृक्षच्छायायां प्रसुप्तः। अनतिदूरे वल्मीकोपरि[1] प्रसारितं भीषणं भुजंगमं दृष्ट्वा असौ चिन्तयामास—"नूनम् एषा क्षेत्रदेवता कदाचिद् अपि न पूजिता, तेन इदं मे कृषि-कर्म्म विफलीभवति। तद् अहम् अस्याः पूजाम् अद्य करिष्यामि"। इत्यवधार्य्य कुतोऽपि क्षीरं याचित्वा शरावे निक्षिप्य वल्मीकान्तिकम् उपगम्य उवाच—"भोः क्षेत्रपाल, मया एतावन्तं कालं न ज्ञातं यत् त्वम् अत्र वससि। तेन पूजा न कृता, तत् साम्प्रतं क्षमस्व"। एवम् उक्त्वा दुग्धं निवेद्य गृहाभिमुखं प्रायात्।

अथ प्रातर् यावद् आगत्य पश्यति तावद् दीनारम्[2] एकं शरावे दृष्टवान्। एवञ्च प्रतिदिनम्

---

(१) पुत्तिकाख्यैः कीटैः संचितो गृहाकारो मृत्तिकाराशिः वल्मीकः।

(२) दीनारं स्वर्णमुद्राम्।

एकाकी समागत्य तस्मै क्षीरं ददाति, एकैकञ्च दीनारं गृह्णाति।

अथैकस्मिन् दिवसे वल्मीके क्षीरनयनाय पुत्रं नियुज्य ब्राह्मणो ग्रामं जगाम। पुत्रोऽपि क्षीरं तत्र नीत्वा संस्थाप्य च गृहं समायातः। दिनान्तरे तत्र गत्वा स दीनारम् एकं दृष्ट्वा गृहीत्वा च चिन्तितवान्—"नूनं सौवर्णदीनारपूर्णोऽयं वल्मीकः। तद् एनं भुजङ्गन् हत्वा सर्व्वम् एकवारं ग्रहीष्यामि"। एवं सम्प्रधार्य्य अन्येद्युः क्षीरं ददता ब्राह्मणपुत्रेण सर्पो लगुड़ेन शिरसि ताड़ितः। स च दैववशाद् अमुक्तजीवितो रोषात् तं ब्राह्मणकुमारं तीव्रविषैर्दशनैः तथा अदशत् यथा स सद्यः[३] पञ्चत्वम् उपागतः।

अथ पुनरपि ब्राह्मणः प्रत्यूषे क्षीरं गृहीत्वा तत्र गत्वा तारस्वरेण सर्पम् अस्तौत्। तदा सर्पो वल्मीकान्तर्लीन एवब्राह्मणं प्रत्युवाच—"त्वं लोभाद् अत्रागतः पुत्रशोकम् अपि विहाय। इतस् तव मम च प्रीतिर् नोचिता। तव पुत्रेण यौवनोन्मत्तेन अहं ताड़ितः, मया च स दष्टः। कथं मया लगुड़प्रहारो विस्मर्त्तव्य, त्वया च पुत्रशोकदुःखं कथं विस्मर्त्तव्यम्"। इत्युक्त्वा बहुमूल्यं हीरकमणिं तस्मै दत्वा पुनस्त्वया नागन्तव्यं

(३) सद्यः तत्क्षणे।

इति कथयित्वा सर्पो विवरं प्रविष्टः । ब्राह्मणोऽपि मणिं गृहीत्वा पुत्रबुद्धिं निन्दन् स्वगृहम् आगतः ।

धर्म्म + आर्त्तः = धर्म्मार्तः

इति + अवधार्य = इत्यवधार्य

यौवन + उन्मत्तेन = यौवनोन्मत्तेन

सदा + एव = सदैव

---

# वकनकुलयोः

कस्मिंश्चिद् वनोद्देशे बहुवकसनाथो वटपादपोऽस्ति। तस्य कोटरे कृष्णसर्प प्रतिवसति स्म। स च वकबालकानजातपक्षानपि सदैव भक्षयन् कालं नयति। अथैको वकः तेन भक्षितान्यपत्यानि दृष्ट्वा शिशुवैराग्यात् सरस्तीरमासाद्य वाष्पपूरपूरितनयनः अधोमुखस्तिष्ठति। तं च तादृक्चेष्टितमवलोक्य कुलीरकः प्रोवाच– "माम! किमेवं रुद्यते भवताऽद्य"। स आह–'भद्र! किं करोमि, मम मन्दभाग्यस्य बालकाः कोटरनिवासिना सर्पेण भक्षिताः, तद्दुःखदुखितोऽहं रोदिमि, तत्कथय मे यद्यस्ति कश्चिदुपायःतद्विनाशाय।" तदाकर्ण्य कुलीरकः चिन्तयामास "अयं तावत् अस्मज्जातिसहजवैरी, तथोपदेशं सत्येन युक्तमनृतं प्रयच्छामि, यथान्येऽपि वकाः सर्वे संक्षयमायान्ति।" आह च "माम! यद्येवं तर्हि मत्स्यमांसखण्डानि नकुलस्य बिलद्वारात् सर्पकोटरं यावत् प्रक्षिप, यथा नकुलस्तन्मार्गेण गत्वा तं दुष्टसर्प विनाशयति।"

अथ तथा अनुष्ठिते मत्स्यमांसानुसारिणा नकुलेन तं कृष्णसर्पं निहत्य तेऽपि तद्वृक्षाश्रयाः सर्वे वकाश्च शनैः शनैर्भक्षिताः ।

भक्षितानि + अपत्यानि = भक्षितान्यपत्यानि

अधोमुखः + तिष्ठति = अधोमुखस्तिष्ठति

यदि + अस्ति = यद्यस्ति

अस्मत् + जातिसहजवैरी = अस्मज्जातिसहजवैरी

नकुलः + तत् + मार्गेण = नकुलस्तन्मार्गेण

तत् + वृक्ष + आश्रयाः = तद्वृक्षाश्रयाः

वकाः + च = वकाश्च

शनैः + भक्षिताः = शनैर्भक्षिताः

---

# पत्तिव्याधनृपामात्यानाम्

अस्ति कस्मिंश्चित् पर्व्वते महान् वृक्षः। तत्र च सिम्भुकनामा कोऽपि पक्षी प्रतिवसति। तस्य पुरीषे सुवर्णम् उत्पद्यते। अथ कदाचित् तम् उद्दिश्य व्याधः कोऽपि समाययौ। स च पक्षी तदग्रतः एव पुरीषम् उत्ससर्ज्ज। अथ पातसमकालम् एव तत् सुवर्णीभूतं दृष्ट्वा व्याधो विस्मयम् अगमत्, उवाच च-"अहो मम शिशुकालादारभ्य शकुनिबन्धव्यसनिनः[1] अशीतिवर्षाणि समभूवन्। न च कदाचिद् अपि पक्षीपुरीषे सुवर्णं दृष्टम्। इति विचिन्त्य स तत्र वृक्षे पाशं बबन्ध।

अथ असावपि पक्षी मूर्खः तत्रैव विश्वस्तचित्तो यथापूर्व्वम् उपविष्टः तत्कालम् एव पाशेन बद्धः। व्याधस्तु तं पाशादुन्मुच्य पञ्जरके संस्थाप्य निजावासं नीतवान्। अथासौ चिन्तयामास किम् अहम् अनेन अपायकारिणा पक्षिणा करिष्यामि। यदि कदाचित् कोऽपि अमुम् ईदृशं ज्ञात्वा राज्ञे निवेदयिष्यति तत् नूनं

---

(१) शकुनिबन्धव्यसनिनः पक्षिबन्धनरूपव्यसनासक्तस्य व्यसनं पापं वृथाचेष्टा वा।

प्राणसंशयो मे भवेत्। अतः स्वयमेव पक्षिणं राज्ञे निवेदयामि। इति विचार्य्य स तथैवानुष्ठितवान्।

अथ राजापि तं पक्षिणं दृष्ट्वा श्रुत्वा च सर्व्वं वृत्तान्तं परां[2] तुष्टिमुपागतः, आह चैवं, "हंहो रक्षापुरुषा! एनं पक्षिणं यत्नेन रक्षत, अशनपानादिकम् अस्मै यथेच्छं प्रयच्छत। अथ मन्त्रिणा अभिहितं-"राजन् किमनेन विहङ्गमेन। अश्रद्धेये व्याधवचने प्रत्ययं मा कार्षीः। किं कदाचित् पक्षिपुरीषे सुवर्णं सम्भवति? तन्मुच्यतां पञ्जरबन्धनाद् अयं पक्षी"। इति मन्त्रिवचनात् राज्ञा मोचितोऽसौ पक्षी उन्नततोरणे[3] समुपविश्य सुवर्णमयीं विष्टां विधाय श्लोकमिमं पठित्वा यथासुखम् आकाशमार्गेण प्रायात्।

पूर्व्वं तावदहं मूर्खो द्वितीयः पाशबन्धकः।
ततो राजा च मन्त्री च सर्व्वं वै मूर्खमण्डलम्॥

शकुनि + बन्ध + व्यसनिनः = शकुनिबन्धव्यसनिनः
निज + आवासम् = निजावासम्

---

(२) परां महतीम्।
(३) उन्नततोरणे उच्चस्य बहिर्द्वारस्योपरि।

# सिंहश्रृगालयोः

कस्मिंश्चित् वनप्रदेशे खरनखरो नाम सिंहः प्रतिवसति स्म। स कदाचित् इतश्चेतश्च परिभ्रमन् क्षुत्क्षामकण्ठो[1] न कश्चिद् अपि सत्त्वम् आससाद। ततश्च अस्तमनसमये स महतीं गिरिगुहाम् आसाद्य तस्यां प्रविष्टः चिन्तयामास—"नूनम् एतस्यां गुहायां रात्रौ केनापि सत्त्वेनागन्तव्यम्। तन् निभृतो[2] भूत्वा तिष्ठामि। एतस्मिन्नन्तरे गुहा स्वामी दधिपुच्छो नाम श्रृगालः समायातः। स च अपश्यत् सिंहपदपङ्क्तिर् गुहायां प्रविष्टा, न च निष्क्रमणं गता[3]। ततश्च सोऽचिन्तयत्-"अहो विनष्टोऽस्मि, नूनम् अस्य अन्तर्गतेन सिंहेन भाव्यम्। तत् किं करोमि, कथं ज्ञास्यामि।

एवं विचिन्त्य दधिपुच्छो द्वारस्थः फूत्कर्त्तुम्[4] आरेभे। "हंहो विल, हंहो विल" इत्युक्त्वा तूष्णीम्भूय स भूयोऽभाषत-"भोः किं न स्मरसि यत् मया त्वया सह समयः कृतोऽस्ति, मया बाह्यात् समागतेन त्वं वक्तव्य, त्वया च

---

(१) क्षुत्क्षामकण्ठः क्षुधा क्षुधया क्षामः क्षीणः कण्ठोऽस्य।
(२) निभृतः अन्यैर्लक्षितः।
(३) निष्क्रमणं गता बहिर्गता।
(४) फुत्कर्त्तुम् आह्वातुम्।

अहम् आकारणीयः[5] । तद् यदि मां नाह्वयसि, ततोऽहं द्वितीयं बिलं यास्यामि ।

तच्छ्रुत्वा सिंहश् चिन्तितवान् "नूनम् एषा गुहा अस्य समागतस्य सदा समाह्वानं करोति । परम् अद्य मद्भयात् न किञ्चिद् ब्रूते । तद् अहम् अस्याह्वानं करोमि येन तदनुसारेण प्रविष्टोऽयं मे भोज्यतां याति । इति सम्प्रधार्य्य[6] सिंहस् तस्य आह्वानम् अकरोत् । अथ सिंहशब्देन सा गुहा प्रतिरवपूर्णा अन्यान् अपि दूरस्थान् आरण्यजीवान् त्रासयामास । शृगालोऽपि पलायमान इमं श्लोकमपठत् ।

"अनागतं यः कुरुते स शोभते
स शोच्यते[7] यो न करोत्यनागतम् ।
वनेऽत्र संस्थस्य समागता जरा
बिलस्य वाणी न कदापि मे श्रुता" ॥

सत्वेन + आगन्तव्यम् = सत्वेनागन्तव्यम्
न + आह्वयसि = नाह्वयसि
मत् + भयात् = मद्भयात्

---

( ५ ) आकारणीयः आह्वातव्यः ।
( ६ ) सम्प्रधार्य्य स्थिरीकृत्य ।
( ७ ) यः पुरुषः अनागतम् अनुपस्थितं सम्भावितमपि यावत् सम्भावितस्य अनिष्टस्य प्रतीकारं विदधाति स शोभते निर्विघ्नं कालम् अतिवाहयति इत्यर्थः । यः अनागतं न करोति सम्भावितस्य अनिष्टस्य प्रतीकारं न विदधाति स शोच्यते बन्धुभिः इति शेषः । विपदि पतितो बन्धूनां शोककरो भवति इत्यर्थः । अत्र अस्मिन् वने वसामि इति भावः बिलस्य गह्वरस्य वाणी समाह्वानरूपा मे मया कदापि न श्रुता ।

## मत्कुणस्य यूकायाश्च

अस्ति कस्यचिन्महीपतेः कस्मिंश्चित् स्थाने मनोरमं शयनस्य स्थानम्। तत्र शुक्लयोः पटयोः मध्ये संस्थिता मन्दविसर्पिणी नाम श्वेता यूका प्रतिवसति। सा च, तस्य महीपतेः रक्तमास्वादयन्ती सुखेन कालं नयमाना तिष्ठति। अन्येद्युश्च तत्र शयनस्थाने कुतश्चित् भ्राम्यन् अग्निमुखो नाम मत्कुणः समायातः।

अथ तं दृष्टवा सा विषण्णवदना प्रोवाच, "भो अग्निमुख! अत्र अनुचिते स्थाने त्वं कुतः समायातः? तत्, यावत् न कश्चित् वेत्ति, तावत् शीघ्रं गम्यताम्।" स आह, "भगवति! गृहमागतस्य असाधोः अपि न न एतत् वक्तु युज्यते; तस्य तु सत्कारः एव कर्त्तव्यः। उक्तञ्च,—

अरावप्युचितं कार्यमातिथ्यं गृहमागते।
छेत्तुः पार्श्वगतां छायां नोपसंहरते द्रुमः॥

अपरं मया अनेकेषां मानुषाणां विविधानि कटुतिक्तकषायाम्लरसास्वादनानि रुधिराणि आस्वादितानि तत् यदि त्वं प्रसादं करोषि तर्हि अस्य नृपतेः शरीरे विविधानाम् अन्नपानचोष्यलेह्यानां च व्यञ्जनानामाहार-वशात् यत् मिष्टं रक्तं सञ्जातं, तस्य आस्वादनेन मम

जिह्वायाः सौख्यं सम्पादय। तत् मया तव गृहमागतेन, बुभुक्षया पीड्यमानेन तव सकाशात् भोजनमर्थनीयम्। तत् त्वया एकाकिन्या अस्य नृपतेः भोजनं कर्तुं न युज्यते"।

तच्छ्रुत्वा मन्दविसर्पिणी प्राह—"भो मत्कुण! अहं निद्रावशं गतस्य अस्य नृपतेः रक्तम् आस्वादयामि। तत् त्वं पुनः अग्निमुखः चपलश्च। तत् यदि मया सह रक्तस्य पानं करोषि, तत् तिष्ठ, अभीष्टतरं रक्तमास्वादय।

सोऽब्रवीत् "भगवति! एवमेव करिष्यामि। यावत् त्वं प्रथमं नृपस्य रक्तं न आस्वादयसि, तावत् मम देवगुरुकृतः शपथः स्यात्, यदि तत् आस्वादयामि।"

एवं तयो परस्परं वदतोः स राजा तत् शयनमासाद्य प्रसुप्तः। अथ असौ मत्कुणो जिह्वालौल्यात् जाग्रतमपि तं महीपतिमदशत्। अथवा साध्विद मुच्यते--

स्वभावो नोपदेशेन शक्यते कर्त्तुमन्यथा।
सुतप्तमपि पानीयं पुनर्गच्छति शीतताम्॥

अथासौ नृपतिः सूच्यग्रेण विद्ध इव, तत् शयनं त्यक्त्वा तत्क्षणादेव उत्थितः। उवाच च "अहो! ज्ञायताम्, अत्र प्रच्छादन पटे मत्कुणो यूका वा नूनं तिष्ठति येनाहं दष्टः"। अथ ये कञ्चुकिनः तत्र स्थिताः ते सत्वरं प्रच्छादनपटं गृहीत्वा सूक्ष्मया दृष्ट्या वीक्षां-

चक्रुः । अत्रान्तरे स मत्कुणः चापल्यात् खट्वान्तं प्रविष्टः, सा मन्दविसर्पिणी तु वस्त्रसन्धेः अन्तर्गता तैः दृष्टा व्यापादिता च । अतः केनापि—

न ह्यविज्ञातशीलस्य प्रदातव्यः प्रतिश्रयः ।
मत्कुणस्य हि दोषेण हता मन्दविसर्पिणी ॥

अरौ+अपि+उचितम् = अरावप्युचितम्
न+ उपसंहारते = नोपसंहरते
अन्न+पान+चोष्य+लेह्यानाम् = अन्नपानचोष्यलेह्यानाम्
सूची+अग्रेण = सूच्यग्रेण

---

## मन्दविषजलपादयोः

अस्ति वरुणाद्रिसमीपे एकस्मिन् प्रदेशे परिणतवया[1] मन्दविषो नाम कृष्णसर्पः। स एवं चित्ते सञ्चिन्तितवान् "कथं नाम मया सुखोपायेन वर्त्तितव्यम्"। ततो बहुमण्डूकं ह्रदम् उपगम्य धृतिपरीतम्[2] इव आत्मानं दर्शितवान्। अथ तथा स्थिते तस्मिन् उदकप्रान्तगतेन एकेन मण्डूकेन असौ पृष्टः माम, किम् अद्य यथापूर्व्वम् आहारार्थं न विहरसि।

सोऽब्रवीत् भद्र कुतो मे मन्दभाग्यस्य आहाराभिलाषः। अद्य प्रदोषे मया आहारार्थं विहरमाणेन दृष्ट एको मण्डूकः। तद्ग्रहणार्थं मया क्रमः सज्जितः[3] सोऽपि मां दृष्ट्वा मृत्युभयेन स्वाध्यायप्रसक्तानां[4] ब्राह्मणानाम् अन्तरम् अपक्रान्तो[5] न विभावितो[6] मया क्वापि

---

(१) परिणतवयाः परिणतं परिणामं प्राप्तं वयोऽस्य वयसा वृद्ध इत्यर्थः।
(२) धृतिपरीतं सन्तोषपूर्णं सर्व्वविषये स्पृहारहितम् इत्यर्थः।
(३) क्रमः सज्जितः आक्रमणार्थम् उद्यमः क्रमः सज्जितः कृतः।
(४) स्वाध्यायप्रसक्तानां वेदाध्ययनरतानाम्।
(५) अपक्रान्तः गतः प्रविष्टः इति यावत्।
(६) विभावितः उद्भावितः लक्षित इति यावत्।

गतः । तत्सादृश्यमोहितचित्तेन मया कस्यचित् ब्राह्मणस्य तनयोऽङ्गुष्ठे दष्टः । ततोऽसौ सपदि पञ्चत्वम् उपागतः।

अथ तस्य पित्रा दुःखितेन अहं शप्तः यथा दुरात्मन् त्वया निरपराधो मत्सुतो दष्टः, तद् अनेन दोषेण त्वं मण्डूकानां वाहनं भविष्यसि, तत्प्रसादलब्धया च जीविकया वर्त्तिष्यसे, अतोऽहं युष्माकं वाहनार्थम् आगतोऽस्मि ।

ततस् तेन सर्व्वमण्डूकानाम् इदम् आवेदितम् । तश्च प्रहृष्टमनोभिःसर्व्वैरेव गत्वा जलपादनाम्नो दर्दुरराजस्य(७) विज्ञप्तम् । अथ असावपि मन्त्रिपरिवृतः 'अत्यद्भुतम् इदम् इति' मन्यमानः ससम्भ्रमं ह्रदाद् उत्तीर्य मन्दविषस्य फणिनः फणप्रदेशम् अधिरूढः । शेषा अपि यथा ज्येष्ठं(८) तत्पृष्ठोपरि समारुरुहुः । किं बहुना बहवस् तदुपरिस्थानम् अप्राप्तवन्तः तस्य अनुपदं(९) धावन्ति स्म । अथ जलपादस् तदङ्गसंस्पर्शसुखं लभमानः प्राह, मन्दविषोऽपि तेषां तुष्ट्यर्थम् अनेकप्रकारगतिविशेषान् अदर्शयत् ।

अथ अन्येद्युर् मन्दविषः छद्मना मन्दं मन्दं विसर्पति । तद् दृष्ट्वा जलपादोऽब्रवीत् भद्र मन्दविष यथापूर्व्वं कथम् अद्य साधु नोह्यते । मन्दविषोऽब्रवीत् देव

---

(७) दर्दुरराजस्य भेकराजस्य ।
(८) यथाज्येष्ठं ज्येष्ठानुक्रमेण ।
(९) अनुपदं पश्चात् ।

अद्य आहारवैकल्यात्[१०] न मे वोढुं शक्तिरस्ति। अथ असावब्रवीत् भद्र भक्षय क्षुद्रमण्डूकान्। तच्छ्रुत्वा प्रहर्षितसर्व्वगात्रो मन्दविषः ससम्भ्रमम् अब्रवीत्—"मम अयम् एव विप्रशापोऽस्ति। तव अनेन अनुज्ञावचनेन प्रीणितोऽस्मि"। ततोऽसौ नैरन्तर्य्येण[११] मण्डूकान् भक्षयन् कतिपयैरेव अहोभिर् बलवान् संवृत्तः। जलपादोऽपि मन्दविषेण कृतकवचनव्यामोहितः[१२] किमपि नावबुध्यते।

अत्रान्तरे अन्यो महाकायः कृष्णसर्पः तम् उद्देशं[१३] समायातः। स च मन्दविषं मण्डूकैर्वाह्यमानं[१४] दृष्ट्वा विस्मयम् अगमत्, आह च "वयस्य, योऽस्माकम् अशनं तैर् वाह्यसे, विरुद्धमेतत्। अथ मन्दविषः अन्तर्गूढम् अवहस्य तस्मै स्वाभिप्रायं निवेदयामास। जलपादस् तत श्रुत्वा नितरां व्यग्रहृदयस्तम् अपृच्छत्—"भद्र किं त्वया अभिहितम् इदं विरुद्धं वचः"।

---

(१०) आहारवैकल्यात् आहारभङ्गात् आहारविरहात् इति यावत्।

(११) नैरन्तर्य्येण अविच्छेदेन।

(१२) कृतकवचनव्यामोहितः कृतकवचनैः कपटवाक्यैः व्यामोहितः मोहमापादितः।

(१३) उद्देशं प्रदेशम्।

(१४) मण्डूकैः भेकैः वाह्यमानं वहनक्रियां कार्य्यमाणम्।

अथासौ आकारप्रच्छादनार्थं[१] न किञ्चिदिति अब्रवीत्। एवं कृतकवचनव्यामोहितो जलपादस् तस्य दुष्टाभिसन्धिं नावबुध्यते। किं बहुना तथा तेन सर्व्वेऽपि भक्षिताः यथा बीजमात्रम् अपि नावशिष्टम्।

सः + अब्रवीत् = सोऽब्रवीत्
आहार + अभिलाषः = आहाराभिलाषः
आहार + अर्थम् = आहारार्थम्
तत्+अङ्ग+संस्पर्श+सुखम् = तदङ्ग संस्पर्श सुखम्
न + उह्यते = नोह्यते
असौ + अब्रवीत् = असावब्रवीत
आकारप्रच्छादन + अर्थम् = आकारप्रच्छादनार्थम्
दुष्ट + अभिसन्धिम् = दुष्टाभिसन्धिम्
न + अवबुध्यते = नाऽवबुध्यते

---

(१५) आकारप्रच्छादनार्थं भावगोपनार्थम्।

# मण्डूककृष्णसर्पयोः

अस्ति कस्मिंश्चित् कूपे गङ्गदत्तो नाम मण्डूकराजः। स कदाचित् दायादैरुद्वेजितः अरघट्टम् आश्रित्य[1] कूपात् क्रमेण निष्क्रान्तः। अथ तेन चिन्तितं कथं तेषां दायादानां मयापकारः कर्त्तव्यः। एवं बहु चिन्तयन् स बिले प्रविशन्तं प्रियदर्शनाभिधम् कृष्णसर्पम् अपश्यत्। तं दृष्ट्वा स भूयोऽचिन्तयत् एनं कृष्णसर्पं कूपे नीत्वा सकलदायादानाम् उच्छेदं करिष्यामि।

एवं स विभाव्य[2] बिलद्वारं गत्वा तम् आहूतवान् एह्येहि प्रियदर्शन ! एहि। तच्छ्रुत्वा सर्पश्चिन्तयामास य एष माम् आह्वयते स सजातीयो न भवति। यतो नैषा सर्पवाणी। अन्येन केनापि सह मर्त्यलोके मम सन्धानं[3] नास्ति। तद् अत्रैव दुर्गे स्थितम् तावत् वेद्मि कोऽयं भविष्यति। उक्तश्च—

---

(१) अरघट्टम् आश्रित्य अरघट्टं जलोद्धरणयन्त्रम् आश्रित्य अवलम्ब्य।

(२) विभाव्य चिन्तयित्वा स्थिरीकृत्येति यावत्।

(३) सन्धानं मेलनं मैत्रीति यावत्।

यस्य न ज्ञायते शीलं न कुलं न च संश्रय.[४] ।
न तेन सङ्गतिं[५] कुर्य्यादित्युवाच वृहस्पतिः ॥

कदाचित् कोऽपि मन्त्रवाग्रौषधचतुरो माम् आहूय बन्धने[६] क्षिपति। अथवा कश्चित् पुरुषो वैरम् आश्रित्य कस्यचित् विपक्षस्यार्थे माम् आह्वयति। अथासौ प्राह-'भोः को भवान् ? स आह "अहं गङ्गदत्तो नाम मण्डूकाधिपतिः त्वत्सकाशे मैत्र्यर्थमभ्यागतः ।

तच्छ्रुत्वा सर्प आह-"भो अश्रद्धेयम् एतत्। तृणानां वह्निना सह मैत्रीसंगमः[७] क ?" गङ्गदत्त आह- "भोः सत्यम् एतत् ; स्वभाववैरी त्वम् अस्माकम् । परं परिभवात्[८] अहं त्वत्सकाशं प्राप्तः" । सर्प आह- "कथय कस्मात् ते परिभवः" ? स आह-'दायादेभ्यः' । सर्पोऽब्रवीत्-"क ते आश्रयः, वाप्यां[९] कूपे तड़ागे ह्रदे वा" । तेनोक्तं पाषाणनिबद्धे कूपे । सर्प आह-"अपदा[१०] वयम् । तन् नास्ति तत्र मे प्रवेशः । प्रविष्टस्य च स्थानं नास्ति यत्र स्थितस्तव दायादान् व्यापादयामि" ।

---

(४) संश्रयः आवासस्थलम् ।
(५) सङ्गतिं मैत्रीम् ।
(६) बन्धने पाशे ।
(७) मैत्रीसंगमः मित्रभावेन मेलनम् ।
(८) परिभवः अवमानना ।
(९) वापी दीर्घिका ।
(१०) अपदाः पादरहिताः ।

गङ्गदत्त आह "भोः समागच्छत्वम्, अहं सुखोपायेन तत्र तव प्रवेशं कारयिष्यामि। तथा तस्य मध्ये जलोपान्ते रमणीयं कोटरम् अस्ति। तत्र स्थितस् त्वं लीलया तान् दायादान् व्यापादयिष्यसि"। तच्छ्रुत्वा सर्पोऽचिन्तयत् अहं तावत् परिणतवयाः। कदाचित् कथञ्चित् मूषिकम् एकं प्राप्नोमि न वा। सुखावहो[11] जीवनोपायोऽनेन कुलाङ्गारेण मे दर्शितः। तद् गत्वा तान् मण्डूकान् भक्षयामि।

एवं विचिन्त्य स तम् आह-"भो गङ्गदत्त, यद्येवं तत् अग्रे भव येन तत्र गच्छावः"। गङ्गदत्त आह-"भो प्रियदर्शन! अहं त्वां सुखेन तत्र नेष्यामि स्थानञ्च दर्शयिष्यामि। परं त्वया मत्परिजनो रक्षणीयः। केवलं यान् अहं तव दर्शयिष्यामि त एव भक्षणीयाः"। सर्प आह-"भद्र साम्प्रतं त्वं मित्रं जातं, तन् न भेतव्यम्। तद्वचनेन भक्षणीयास् ते दायादाः"। एवम् उक्त्वा विलात् निष्क्रम्य तम् आलिङ्ग्य च स तेन सह प्रस्थितः।

अथ कूपम् आसाद्य अरघट्टमार्गेण सर्पस् तेन स्वालयं नीतः। ततश् च गङ्गदत्तेन कृष्णसर्पं कोटरं नीत्वा दर्शितास् ते दायादाः। ते च सर्व्वे तेन शनैः शनैर् भक्षिताः। अथ मण्डूकाभावे सर्पेण अभिहितं-"भद्र निःशेषितास् ते रिपवः। तत् प्रयच्छ मे अन्यत् किंचित्

(११) सुखावहः सुखजनकः अनायाससाध्यो वा।

भोजनम्। यतोऽहं त्वया अत्रानीतः। गङ्गदत्त आह-"कृतं त्वया मित्रकृत्यम्। तत् साम्प्रतम् अनेनैव अरघट्ट-मार्गेण गम्यताम्"।

सर्प आह-"भो गङ्गदत्त, न सम्यग् अभिहितं भवता। कथम् अहं तत्र गच्छामि। मदीयं बिलदुर्गम् अन्येन रुद्धं भविष्यति। तस्माद् अत्र स्थितस्य मे मण्डूकम् एकैकं स्ववर्गीयं प्रयच्छ। नो चेत् सर्वान् एव भक्षयिष्यामि"। तच्छ्रुत्वा गंगदत्तो व्याकुलितमना अचिन्तयत्-"अहो किम् एतन् मया कृतम् एनं समानीय। यदि निवारयिष्यामि तत् सर्वान् एव भक्षयिष्यति"। एवं निश्चित्य स तस्य एकैकं मण्डूकं नित्यम् एव अदिशत्। सोऽपि तं भक्षयित्वा अन्यम् अपि तस्य परोक्षे भक्षयति।

अथान्यस्मिन् दिने तेनापरान् मण्डूकान् भक्षयित्वा गंगदत्तसुतो यमुनादत्तनामा मण्डूको भक्षितः। तं भक्षितं ज्ञात्वा गंगदत्तो बहु विललाप। ततोऽसौ स्वपत्न्या अभिहितः।

कि क्रन्दसि दुराक्रन्द[१२] स्वपक्षक्षयकारक।
स्वपक्षस्य क्षये ज्ञाते को नस्त्राता भविष्यति॥

अथ गच्छति काले तेन सकलम् एव कवलितं[१३] मण्डूककुलं केवलम् एको गंगदत्तस्तिष्ठति। ततः

(१२) दुराक्रन्द विफलविलाप अधुना तव विलापो विफल एवेति भावः।

(१३) कवलितं ग्रस्तं भक्षितमिति यावत्।

प्रियदर्शनेन भणितम्-"भद्र गंगदत्त ! बुभुक्षितोऽहम्। निःशेषताः सर्व्वे मण्डूकाः, तद् दीयतां मे किंचिद् भोजनम्"। स आह-"भो मित्र, न त्वया अत्र विषये मयि विद्यमाने कापि चिन्ता कार्य्या। यदि मां प्रेषयसि तदा अन्यकूपस्थान् मण्डूकान् विश्वास्य अत्रानयामि"। स आह मम तावत् त्वम् अभक्ष्यो भ्रातृस्थानीयः[१४] यद्येवं करोषि तर्हि साम्प्रतं पितृस्थाने भवसि। तद् एवं क्रियताम्। स तु तद् आकर्ण्य अरघट्टमाश्रित्य कूपाद् विनिष्क्रान्तः। प्रियदर्शनोऽपि तदागमनकांक्षया तत्र प्रतिक्षमाणस्तस्थौ।

अथ चिराद् अपि अनागते गंगदत्ते प्रियदर्शनः अन्यकोटरवासिनीं गोधामुवाच "भद्रे ! क्रियताम् स्तोकं[१५] साहाय्यम्। चिरपरिचितस्ते गंगदत्तः। कुत्रचित् जलाशये अन्विष्य गत्वा तत्सकाशं मम सन्देशं कथय यद् आगम्यतां द्रुतम् एकाकिनैव भवता यद्यन्ये मण्डूकाः नागच्छन्ति। नाहं त्वया विना अत्र वस्तुं शक्नोमि। किञ्च अहं यदि त्वां प्रति विरुद्धमाचरामि मदीयं जन्मसुकृतंतव[१६]"।

गोधा तु तद्वचनाद् द्रुतं गंगदत्तम् अन्विष्य आह-"भद्र गंगदत्त? स तव सुहृत् प्रियदर्शनस्तव पन्था-

(१४) भ्रातृस्थानीयः भ्रातृस्थाने स्थितः भ्रातृसदृश इति यावत्।
(१५) स्तोकम् अल्पम्।
(१६) अस्मिन् जन्मनि यन्मया सुकृतं कृतं तत् तवास्तु।

नमीक्षमाणः तिष्ठति। तत शीघ्रम् आगम्यताम्। उक्तश्च तेन यदि त्वां प्रति विरुद्धमा चरामि मदीयं जन्मसुकृतं तव। तन् निःशंकेन मनसा समागम्यताम् तदू आकर्ण्य गंगदत्तः प्राहः—

बुभुक्षितः[१७] किं न करोति पापं,
क्षीणा[१८] जना निष्करुणा भवन्ति।
आख्याहि भद्रं प्रिय- दर्शनस्य,[१९]
न गङ्गदत्तः पुनरेति कूपम्।

मया + अपकारः = मयापकारः
एहि + एहि = एह्येहि
न + एषा = नैषा
कुर्य्यात् + इति + उवाच = कुर्यादित्युवाच
मन्त्र + वाद्य + औषधचतुरः = मन्त्रवाद्यौषधचतुरः
मैत्री + अर्थम् = मैत्र्यर्थम्
कुल + अङ्गारेण = कुलाङ्गारेण
ते + एव = त एव
स्व + आलयम् = स्वालयम्
नः+त्राता = नस्त्राता
तत् + आगमनकाङ्क्षया = तदागमनकाङ्क्षया
एकाकिना+एव = एकाकिनैव
पुनः+एति = पुनरेति

---

(१७) बुभुक्षितः बुभुक्षया पीडितः क्षुधार्त्त इति यावत्।
(१७) क्षीणा दुर्बलाः।
(१९) प्रियदर्शनस्य प्रियदर्शनम्। सम्बन्धविवक्षयां षष्ठी।

# विप्राणां किरातानां च

एकस्मिन् नगरे कोऽपि विप्रो महाविद्वान्, परं पूर्वजन्मनः संस्काराणां वशात् चौरो वर्त्तते। स तस्मिन् पुरेऽन्यदेशादागतान् चतुरो विप्रान् बहूनि वस्तूनि विक्रीणतो दृष्ट्वा चिन्तितवान्, "अहो! केनोपायेन एषां धनं लभे" इति विचिन्त्य तेषां पुरोऽनेकानि अतिप्रियाणि मधुराणि वचनानि, शास्त्रोक्तानि सुभाषितानि च जल्पता, तेषां मनसि विश्वासमुत्पाद्य सेवा कर्तुमारब्धा।

अथ तस्मिन् सेवां कुर्वति, तैर्विप्रैः सर्ववस्तूनि विक्रीय बहुमूल्यानि रत्नानि क्रीतानि। ततः तानि जंघामध्ये तत्समक्षमेव निधाय स्वदेशं प्रति गन्तुमुद्यमो विहितः। ततः स धूर्त्तविप्रः तान् विप्रान् गन्तुमुद्यतान् प्रेक्ष्य चिन्ताव्याकुलितमनाः संजातः,चिन्तयामास "अहो! धनमेतत् न किंचित् मया प्राप्तम्। अथ एभिः सह यामि, पथि क्वापि विषं दत्वा एतान्निहत्य सर्वरत्नानि गृह्णामि" इति विचिन्त्य तेषामग्रे सकरुणं विलप्य इदमाह-"भोः मित्राणि! यूयं मामेकाकिनं मुक्त्वा गन्तुमुद्यताः, तन्मे मनो भवद्भिः सह स्नेहपाशेन बद्धं, भवद्भिरहनास्मैव

आकुलं सजातं, धृतिं कथमपि न धत्ते। यूयमनुग्रहं विधाय सहायभूतं मामपि सहैव नयत"।

तद्वचः श्रुत्वा ते करुणार्द्रचित्ताः तेन सममेव स्वदेशं प्रति प्रस्थिताः। अथाध्वनि पल्लीपुरमध्ये व्रजतां तेषां पंचानामपि ध्वांक्षाः कथयितुमारब्धवन्तः, "रे रे किराताः! धावत धावत इमे धनिनो यान्ति। एतान्निहत्य धनं नयत"। ततः किरातैः ध्वांक्षवचनं निशम्य सत्वरं गत्वा ते विप्राः लगुडप्रहारैः जर्जरीकृत्य, वस्त्राणि मोचयित्वा विलोकिताः, परं धनं किञ्चिन्न लब्धम्। तदा तैः किरातैरभिहितम्, "भो पान्थाः! पुरा कदापि ध्वांक्षवचनमनृतं नासीत, अतः भवतां सन्निधौ क्वापि धनं विद्यते। तदर्पयत, अन्यथा सर्वेषामपि वधं विधाय, चर्म विदार्य, प्रत्यंगं प्रेक्ष्य, धनं नेष्यामः"।

तदा तेषामीदृशं वचनं समाकर्ण्य चौरविप्रेण मनसि चिन्तितम्, 'यदा एषां विप्राणां वधं विधाय अंगं विलोक्य रत्नानि नेष्यन्ति, तदापि मां हनिष्यन्ति। ततोऽहंपूर्वमेवारत्नमात्मानं समर्प्य एतान् मोचयामि। उक्तञ्च–

मृत्योर्विभेषि किं बाल! न स भीतं विमुञ्चति।
अद्य वाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः॥

इति निश्चित्य अभिहितम्, 'भोः किराताः! यदि एवं ततः पूर्वं मां निहत्य विलोकयत। ततस्तैः तथा-

नुष्ठिते तं धनरहितमवलोक्य अपरे चत्वारोऽपि मुक्ताः। तदुक्तम्—

पण्डितोऽपि वरं शत्रुर्न मूर्खो हितकारकः।
विदुषा चौरविप्रेण रक्षिताः धनिनो जनाः॥

भवत्+विरहनाम्ना+ एव = भवद्विरहनाम्नैव

तत् + अर्पयत = तदर्पयत

पूर्वम् + एव + अग्लम् + आत्मानम् = पूर्वमेवारत्नमात्मानम्

वा + अब्द + शत + अन्ते = वाब्दशतान्ते

---

## सिंहशृगालरासभानाम्

कस्मिंश्चिद् वनोद्देशे करालकेशरो नाम सिंहः प्रतिवसति। तस्य च धूसरको नाम शृगालः परिचारकोऽस्ति। कदाचित् तस्य सिंहस्य हस्तिना सह युध्यमानस्य शरीरेऽतिगुरवः प्रहाराः सञ्जाताः। तैरसौ पदमेकमपि चलितुं न शक्नोति। तस्याचलनाच् च धूसरकः क्षुत्क्षामकण्ठो दौर्बल्यं गतः। अन्यस्मिन्नहनि स सिंहम् अवोचत् "स्वामिन्! बुभुक्षया पीड़ितोऽहम् पदम् अपि चलितु न शक्नोमि। तत् कथं ते शुश्रूषां करोमि"।

सिंह आह—"भो गच्छ अन्विष्यतां किञ्चित सत्त्वम् येनाहम् इमाम् अवस्थां गतोऽपि व्यापादयामि"। तद् आकर्ण्य शृगालोऽन्वेषणं कुर्वन् कश्चित् समीपवर्त्तिनं ग्रामम् आसादितवान्। तत्र च लम्बकर्णो नाम गर्दभस्तड़ागोपान्ते प्रविरलदूर्वाङ्कुरान् कृच्छ्राद् आस्वादयन् दृष्टः। ततश्च समीपवर्त्तिना भूत्वा तेनाभिहितम् "माम, नमस्कारोऽयं मदीयः सम्भाव्यताम्[१], चिरात् दृष्टोऽसि। तत् कथय किमेवं दुर्बलतां गतः"।

(१) सम्भाव्यतां परिगृह्यताम्।

लम्बकर्ण आह "भो भागिनेय ! किं कथयामि। रजकोऽतिनिर्दयो मामतिभारेण पीड़यति। घास-मुष्टिम् अपि न प्रयच्छति। केवलमत्र दूर्वाङ्कुरान् धूलिमिश्रितान् भक्षयामि। तत् कुतो मे शरीरपुष्टिः"। शृगाल आह—"माम यद्येवं तदस्ति मरकतसदृशशस्य-पूर्णो नदीसनाथो[2] रमणीयः प्रदेशः। तत्रागत्य मया सह सुखमनुभवंस्तिष्ठ"। लम्बकर्ण आह—"भो भगिनीसुत! युक्तमुक्तं भवता। परं वयं ग्राम्याः पशवः अरण्य-चराणां बध्याः। तत् किं तेन भव्यप्रदेशेन"। शृगाल आह—"माम मैवं वद, मद्भुजरक्षितः प्रदेशोऽसौ। नास्ति कस्यचिद् अपरस्य तत्र प्रवेशः"।

अथ लम्बकर्णः शृगालेन सह सिंहान्तिकम् आगतः। सिंहोऽपि व्याकुलम् तं गर्दभं दृष्ट्वा यावत्समुत्तिष्ठति तावद् रासभः पलायितुम् आरब्धवान्। अथ तस्य पला-यमानस्य सिंहेन तलप्रहारो[3] दत्तः। स च मन्दभागस्य व्यवसाय[4] इव व्यर्थतां गतः।

अथ शृगालः कोपाविष्टस्तमुवाच— "भोः किम् एवंविधः प्रहारस्ते। यदि गर्दभोऽपि तव पुरतो बलाद् गच्छति तत् कथं गजेन सह युद्धं करिष्यसि। दृष्टं ते

---

(२) नदीसनाथः नदीसहायः यस्य सन्निधौ नदी विद्यते इत्यर्थः।

(३) तलप्रहारः करतलप्रहारः नखरप्रहार इति यावत्।

(४) व्यवसायः उद्योगः।

बलम्"। अथ सलज्जं सिंह आह– "भोः किमहं करोमि। मया न क्रमः[५] सज्जीकृतआसीत। अन्यथा गजोऽपि मत्क्रमाक्रान्तो न गच्छति"। शृगाल आह– "अद्यैव पुनस्त वान्तिकं तमानेष्यामि। त्वया सज्जीकृतक्रमेण स्थातव्यम्।

सिंह आह–"भद्र यो मां प्रत्यक्षं दृष्ट्वा गतः स पुनः कथमत्रागमिष्यति। तदन्यत् किमपि सत्त्वमन्विष्यताम्। शृगाल आह–किं तवानेन व्यापारेण त्वं केवलं सज्जितक्रमस्तिष्ठ। अथ धूर्त्तवचनप्रतारितो रासभः पुनरपि सिंहान्तिकम् आगतः। ततः प्राक्सज्जितक्रमेण सिंहेन लम्बकर्णो व्यापादितः। ततश्च स शृगालं रक्षकं निरूप्य स्नानार्थं नद्यां गतः। अत्र शृगालेन अतिलौल्यात्[६] खरस्य कर्णसहितं हृदयं भक्षितम्।

अथ यावत् सिंहः स्नात्वा प्रत्यागतः तावत् कर्णहृदयरहितो रासभस्तिष्ठति। तं दृष्टवा कोपपरीतः[७] सिंहः शृगालम् आह–पाप किम् इदमनुचितं कर्म समाचरितं यत् कर्णहृदयभक्षणेन अयमुच्छिष्टतां नीतः। शृगालः सविनयमाह– "स्वामिन् मैवं वद।

---

( ५ ) क्रमः पराक्रमः आक्रमणं वा।
( ६ ) अतिलौल्यात् अतिचपलत्वात् अतिलोभादिति यावत्।
( ७ ) कोपपरीतः क्रोधाभिभूतः।

कर्णहृदयरहितोऽयं रासभ आसीत्। तेन स इहागत्य त्वामवलोक्य भयाद् गत्वा भूयोऽपि आगतः" । अथ तद्वचनं श्रद्धेयं मत्वा सिंहस्तेन सह तं संविभज्य भक्षितवान्।

तस्य + अचलनात् + च = तस्याचलनाच्च ।

प्रविरलद् + दूर्व + अंकुरान् = प्रविरलदूर्वांकुरान् ।

यदि + एवम् = यद्येवम्

अनुभवन् + तिष्ठ = अनुभवंस्तिष्ठ ।

कोप + आविष्टः+तम् = कोपाविष्टस्तम् ।

---

## सिंहोश्शृगालशावयोः

कस्मिंश्चिद् वनोद्देशे सिंहदम्पती निवसतः स्म। अथ कदाचित् सिंही पुत्रद्वयम् अजीजनत्। सिंहो नित्यमेव मृगान् व्यापाद्य सिंह्यै ददाति। एकस्मिन्नहनि तेन किम् अपि नासादितम्। वने भ्रमत एव तस्य रविरस्तं गतः। अथ तेन स्वगृहम् आगच्छता शृगाल शिशुः प्राप्तः। तम् असौ बालकम् अवलोक्य यत्नेन दंष्ट्रामध्यगतं कृत्वा सिंह्यै जीवन्तम् समर्पितवान्।

ततः सिंह्या अभिहितं 'भोः कान्त, आनीतं त्वया किञ्चिद् अस्माकं भोजनम्। सिंह आह—"प्रिये मया अद्यैनं शृगालशिशुं परित्यज्य[1] न किञ्चित् सत्त्वम् आसादितम्। एष च बालोऽयम् इति कृत्वा न मया व्यापादितः। इदानीं त्वम् एनं भक्षयित्वा पथ्यं कुरु। प्रभाते पुनरन्यत् किञ्चिद् आहरिष्यामि। सा प्राह—"भोः कान्त त्वया बालोऽयम् इति विचिन्त्य न हतः। कथम् एनमहं स्वोदरार्थे विनाशयामि। तस्मात् ममायं तृतीयः पुत्रो भवतु। एवमुक्त्वा सिंही तम् अपि स्तनक्षीरेण पुष्टिम् अनयत्। एवं ते त्रयः शिशवः परस्परम्

(१) शृगालशिशुं परित्यज्य शृगालशिशुं बिना।

अज्ञातजातिविशेषा एकाहारविहारा[2] बाल्यसमयम् अतिवाहयन्ति स्म।

अथ कदाचित् तत्र वने भ्रमन् आरण्यगजः समायातः। तं दृष्ट्वा तौ सिंहसुतौ द्वावपि कुपितौ तं प्रति प्रचलितौ। तद् अवलोक्य शृगालसुतेनाभिहितम्—"हंहो गजोऽयं युष्मत्कुलशत्रुः तन् न गन्तव्यम् एतस्याभिमुखम्"। एवम् उक्त्वा स गृहं प्रधावितः। तावपि ज्येष्ठबान्धवभङ्गात्[3] निरुत्साहतां गतौ। अथ तौ गृहं प्राप्य पित्रोर् अग्रतो ज्येष्ठभ्रातृचेष्टितम् ऊचतुः यथा गजं दृष्ट्वा दूरत एव नष्टोऽसौ। स तु तद् आकर्ण्य कोपाविष्टः प्रस्फुरिताधरः[4] ताम्रलोचनो[5] भ्रुकुटिं कृत्वा तौ निर्भर्त्सयन् परुषवचनान्युवाच।

ततः सिंह्या एकान्ते नीत्वा प्रबोधितोऽसौ वत्स मा एवं कदाचिज् जल्प। भवतो लघुभ्रातरौ[6] एतौ। असौ तु

---

(२) एकः एकविधः आहारः भोजनं विहारः क्रीड़ा च येषां ते एकविधमाहारं च कुर्वाणा इत्यर्थः।

(३) ज्येष्ठबान्धवभङ्गात् ज्येष्ठभ्रातृपलायनात्।

(४) प्रस्फुरिताधरः कम्पिताधरः।

(५) ताम्रलोचनः रक्तनयनः।

(६) लघुभ्रातरौ कनिष्ठभ्रातरौ।

प्रभूतकोपाविष्टस् ताम् उवाच—"किम् अहम् एताभ्यां शौर्य्येण रूपेण कौशलेन वा हीनः येन माम् उपहसतः? तन् मया अवश्यम् एतौ व्यापादनीयौ"। तद् आकर्ण्य सिंही तस्य जीवितम् इच्छन्ती अन्तर्विहस्य प्राह—

शूरोऽसि कृतविद्योऽसि दर्शनीयोऽसि पुत्रक।
यस्मिन् कुले त्वमुत्पन्नः गजस्तत्र न हन्यते॥

शृणु वत्स त्वं शृगालीसुतः कृपया मया स्वस्तन-क्षीरेण पुष्टिं नीतः। यावद् एतौ मत्पुत्रौ त्वां शृगालं न जानीतः तावद् द्रुतं गत्वा स्वजातीयानां मध्ये भव। नो चेत् आभ्यां हतो मृत्युपथं समेष्यसि। सोऽपि तद्वचनं श्रुत्वा भयव्याकुलमनाः शनैः शनैर् अपसृत्य स्वजात्या मिलितः।

---

स्व + उदर + अर्थे = स्वोदरार्थे

एक + आहार—विहाराः = एकाहारविहाराः

तौ + अपि = तावपि

प्रस्फुरित + अधरः = प्रस्फुरिताधरः

परुषवचनानि + उवाच = परुषवचनान्युवाच

# सिंहशृगालादीनाम्

अस्ति कस्मिंश्चिद् वने महाचतुरको नाम शृगालः। तेन कदाचिद् अरण्ये मृतो गजः समासादितः। स तु तस्य समन्तात् परिभ्रमति, परं कठिनां त्वचं भेत्तुं न शक्नोति। अत्रावसरे इतश्चेतश्च विचरन् कश्चित् सिंहः तत्रैव प्रदेशे समाययौ।

सिंहं समागतं दृष्ट्वा शृगालः संयोजितकरयुगलः सविनयम् उवाच—"स्वामिन् त्वदीयोऽहं लागुड़िकः[1] तवार्थे गजम् इमं रक्षामि। तद् एनं भक्षयतु स्वामी"। तं प्रणतं दृष्ट्वा सिंहः प्राह—"भो नाहम् अन्येन हतं सत्त्वं कदाचिद् अपि भक्षयामि। तत् तवैव गजोऽयं मया प्रसादीकृतः। तच्छ्रुत्वा शृगालः सानन्दम् आह—"युक्तम् इदं स्वामिनो निजभृत्येषु"।

सिंहे गते कश्चिद् व्याघ्रः समाययौ। तम् अपि दृष्ट्वा असौ व्यचिन्तयत अहो एकम् तावद् दुरात्मा प्रणिपातेनापवाहितः[2] कथम् इदानीम् एनम् अपि अपवाह-

---

(१) लागुड़िकः लगुड़वाही पदातिः इति यावत्।

(२) अपवाहितः अपसारितः दुरीकृत इति यावत्।

यिष्यामि । नूनं शूरोऽयम् । न खलु भेदं[3] विना साध्यो[4] भविष्यति ।

एवं सम्प्रधार्य्य तस्याभिमुखो भूत्वा शृगाल उन्नत-कन्धरः ससम्भ्रमम्[5] उवाच—"माम कथम् अत्र भवान् मृत्युमुखे प्रविष्टः, गजः सिंहेन व्यापादितः; स च माम् एतद्रक्षणे नियुज्य नद्यां स्नानार्थं गतः । तेन गच्छता मम समादिष्टं यदि कश्चिद् इह व्याघ्रः समायाति त्वया सुगुप्तं ममावेदनीयम् । अद्य वनम् इदम् मया निर्व्याघ्रं कर्त्तव्यम् । पूर्वं व्याघ्रेणैकेन मया व्यापादितो गजो भक्षयित्वा उच्छिष्टतां नीतः । तद्दिनाद् आरभ्य व्याघ्रान् प्रति प्रकुपितोऽस्मि" ।

तच्छ्रुत्वा व्याघ्रः सन्त्रस्तस् तम् आह—"भो भागिनेय ! देहि मे प्राणदक्षिणाम्[6] । त्वया तस्य चिरायातस्य[7] अपि मदीया वार्त्ता नाख्येया" । एवम् अभिधाय सत्वरम् असौ पलायाञ्चक्रे ।

गते व्याघ्रे तत्र कश्चिद् द्वीपी समायातः । तम् अपि दृष्ट्वा असौ व्यचिन्तयत् दृढदंष्ट्रोऽयं चित्रकः । तद् अस्य पार्श्वात् एतस्य गजस्य यथा चर्म्मोच्छेदो भवति

(३) भेदं विरोधघटनाम् ।
(४) साध्यः साधयितुं वशीकर्तुं शक्यः ।
(५) ससम्भ्रमं सभयं सोद्वेगं वा ।
(६) प्राणदक्षिणां प्राणदानम् ।
(७) चिरायातस्य विलम्बेनागतस्य ।

तथा करोमि। एवं निश्चित्य स तम् उवाच—"भो भगिनी-सुत ! किमिति चिराद् दृष्टोऽसि कथञ्चबुभुक्षित इव लक्ष्यसे। तद् अतिथिर् असि मे। एष गजः सिंहेन हतस् तिष्ठति। अहं च अस्य तदादिष्टो[८] रक्षकः। यावत् सिंहो न समायाति तावत् अस्य मांसं भक्षयित्वा तृप्तिं कृत्वा द्रुतं व्रज"।

स आह—"माम यद्येवं न कार्य्यं मे मांसाशनेन। सर्व्वथा तद् एव भुज्यते यत् परिणमति[९]। तद् अहम् इतोऽपयास्यामि"। शृगाल आह—"भो अधीर विस्रब्धो[१०] भूत्वा भक्षय त्वम्। तस्यागमनं दूरत एव तवाहं निवेदयिष्यामि"। ततो द्वीपी मांसं भक्षयितुं गजस्य चर्म्म चिच्छेद। त्वचं भिन्नां विज्ञाय ससम्भ्रमं जम्बुकेनाभिहितम् "भो भगिनीसुत गम्यतां गम्यताम्। एष सिंहः समायाति"। तच्छ्रुत्वा चित्रको दूरं प्रणष्टः[११]।

ततोऽसौ चित्रककृतेन द्वारेण सुखेन हस्तिमांसं बुभुजे।

तव + एव = तवैव
प्रणिपातेन + अपवाहितः = प्रणिपातेनापवाहितः
चर्म्म + उच्छेदः = चर्मोच्छेदः

---

(८) तदादिष्टः तेन सिंहेन आदिष्टः आज्ञप्तः नियुक्त इति यावत्।
(९) परिणमति परिपाकं व्रजति।
(१०) विस्रब्धः विश्वस्तः निःशङ्क इति यावत्।
(११) प्रणष्टः अदर्शनं गतः पलायित इति यावत्।

# वणिक्-चातुर्यम्

आसीत् काशी समीपे कस्मिंश्चित् ग्रामे गुरुदत्तो नामकश्चन् वणिक् । तेन च यूरोपीय महासंग्रामकाले पाश्चात्यदेश-वस्तूनामागमन निषेधात् प्राक्सञ्चितवस्तु-जातस्य महता मूल्येन विक्रयात् प्रभूता सम्पत्तिः संचितेति सर्वत्र ख्यातिरजायत । एकदा तद्धनलिप्सवः केचिच्चौरा रात्रौ त गृहं प्रविश्य निलीय स्थिताः । एतदवबुध्य स वणिक् प्रत्युत्पन्नमतिः सर्वं वित्तजातं भूगृहे निगूह्य भार्यांश्चाहूय अभाषत—"प्रिये ! दुर्भिक्ष कारणाद् एषु दिवसेषु सर्वत्र चौराः संचरन्ति । तत्सर्वं रत्नसुवर्णादिकं संगृह्य पेटिकायां च निधाय निष्कुटस्थे कूपे निक्षिपावः" । सापि धीमती पत्युर्हृदयगतं विज्ञाय 'वाढम्' इत्याह । अथ स चतुरो वणिक् कामपि पेटिकां शिलाशकलैरापूर्य तां च रज्जुभिर्दृढं बद्ध्वा गभीरे तस्मिन् कूपे सघटात्कारं प्राक्षिपत् । तं च महान्तं शब्दमाकर्ण्य मूढास्तस्करा वित्तलोलुपाः कूपसमीपं गत्वा स्वेषु कंचन कूपमवातारयन् । परमेकाकी पेटिका-भारस्य महत्वात् तामुद्धर्तुमसौ न शशाक । तेषामको-ऽकथयत्—भो ! बहुद्रविणपूर्णेयं पेटिका, नैकेन बहिरा-नेतुं शक्या । तस्मात् सर्वैः सम्भूय यतितव्यम् । भाग्यादेव एवंविधोऽवसरो लभ्यते । अथान्यः प्रोवाच—

"भो! यद्येकेन न बहिरानेतुं शक्यते, तदा अपरोऽपि कश्चित् कूपे प्रविशतु। तृतीयोऽवदत्—रे! रे एवं बहु-विवादेन रजन्यपि अतियायात्, श्रेष्ठी वा प्रबुध्येत। यदेवास्माकं स्वामी कथयति, तदेवानुष्ठीयताम्। यतः—

वहवो यत्र नेतारः सर्वे पण्डितमानिनः।
सर्वे महत्त्वमिच्छन्ति तद्वृन्दमवसीदति॥

ततस्तद्वचनात् सर्वेषु मौनमालम्ब्य स्थितेषु तेषां नायकस्तस्करः उवाच—"भोः! सर्वे मिलित्वा तत्र स्थितघटीयन्त्रेण जलान्युधत्य एतं कूपं रिक्तं कुरुत"। सर्वे तदाज्ञामनुसृत्य जलनिष्कासनव्यग्रा बभूवुः।

स वणिक् चैतद् विज्ञाय तैरलक्षित एव तज्जलं निष्कुटपादपानाम् उपयोगाय अगृह्णात्। क्रमेण तैः स कूपो निर्जलीकृतः। पादपानामालवालानि च जलैः पूर्णानि। अन्ते च ते मूढाः कूपान्तः पतितां पेटिकां शिलाशकलपूर्णां दृष्ट्वा लज्जमानाः वणिक् चातुर्यं च शंसन्तः यथागतं गता।

संचिता + इति = संचितेति।

भार्याम् च + आहूय = भार्याञ्चाहूय।

रजनी + अपि = रजन्यपि।

---

# चतुर्णां ब्राह्मणतनयानाम्

कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणपुत्रा निवसन्ति स्म। तेषां त्रयः सर्व्वशास्त्रपारगाः परं बुद्धिरहिताः एकस्तु शास्त्रपराङ्मुखः केवलं बुद्धिमान्। अथ कदाचित् तैर् मिलित्वा मन्त्रितं को गुणो विद्यायाः यदि देशान्तरं गत्वा अर्थोपार्ज्जनं न क्रियते। तत् सर्व्वे देशान्तरं गच्छामः। इति मन्त्रयित्वा ते गृहान् निर्जग्मुः।

अथ कश्चिन् मार्गं गत्वा तेषां ज्येष्ठः प्राह—"हंहो अस्माकम् एकश् चतुर्थो मूढः केवलं बुद्धिमान्। न च विद्यां विना केवलबुद्धया धनं लभ्यते। वयम् अस्मै स्वोपार्ज्जनविभागं न दास्यामः। तद् एष निवृत्य गृहं गच्छतु। अत्र द्वितीयेनाभिहितम्—हंहो सुबुद्धे! विद्याहीनस् त्वम्। तद् गच्छ गृहम्"। ततस् तृतीयेन अभिहितम्—"हंहो न युज्यते कर्त्तुम्। यतो वयम् बाल्यात् प्रभृति एकत्र क्रीड़िताः। तद् आगच्छतु एषः अस्मदुपार्ज्जितस्य वित्तस्य संविभागी भवतु"।

ततस् तैर् गच्छद्भिर् अटव्यां मृतसिंहास्थीनि दृष्टानि। ते ऊचुः हंहो पूर्व्वाधीतविद्यायाः प्रत्ययः[1]

---

(१) प्रत्यय परीक्षा।

क्रियताम्। किंचिद् एतत् मृतसत्त्वं तिष्ठति। अभ्यस्तविद्याप्रभावेण एतत् प्रत्युज्जीवयामः। ततश्च एकेन अभिहितम् अहम् अस्थिसञ्चयं कर्तुं जानामि। द्वितीयेनाभिहितं चर्म्ममांसरुधिरं प्रयच्छामि। तृतीयेन अभिहितम् अहं संजीवनं करोमि। तत एकेनास्थिसञ्चयः कृतः। द्वितीयेन चर्म्ममांसरुधिरैः स अस्थिसञ्चयः संयोजितः। तृतीयो यावत् जीवितं योजयितुं लग्नः[3] तावत् स बुद्धिमता निषिद्धः, उक्तश्च—"एष सिंहः, यद्येनं सजीवं करिष्यसि तत् सर्व्वान् एव अस्मान् एष व्यापादयिष्यति"।

ततस्तेनाभिहितं धिङ् मूर्ख! नाहं विद्यां विफलतां नेष्यामि। ततो बुद्धिमता अभिहितम्—"तर्हि प्रतीक्षस्व यावद् अहम् एतं समीपवर्त्तिनं तरुम् आरोहामि"। तेन तथा अनुष्ठिते[4] यावत् सिंहः सजीवः कृतः तावत् तेन उत्थाय त्रयोऽपि व्यापादिताः। स च बुद्धिमान् सिंहे स्थानान्तरं गते वृक्षाद् अवतीर्य्य गृहं गतः।

स्व + उपार्जन-विभागम् = स्वोपार्ज्जनविभागम्।

---

( ३ ) लग्नः उद्यतः।

( ४ ) तेन बुद्धिमता तथा अनुष्ठिते समीपवर्त्तिनि तरौ तस्मिन् आरूढे इत्यर्थः।

# पण्डित मूर्खाणाम्

कस्मिंश्चिद् अधिष्ठाने चत्वारो ब्राह्मणकुमाराः परस्परं मित्रत्वम् आपन्ना वसन्ति स्म । तेषां मतिर् अजायत--"भो देशान्तरं गत्वा विद्याया उपार्ज्जनं क्रियताम्" । अथ अन्यस्मिन् दिने विद्याया उपार्ज्जनार्थं ते कान्यकुब्जं गताः । तत्र च विद्यामठे गत्वा पठन्ति । एवं द्वादशाब्दान् स्थित्वा सर्व्वे विद्याकुशलाः सञ्जाताः । ततश् चतुर्भिस् तैर् मिलित्वा उक्तम्-"वयं सर्व्वे विद्यापारं गताः । तद् उपाध्यायम् अनुज्ञाप्य[1] स्वदेशं गच्छामः" । 'अथैवं क्रियताम्' इत्युक्त्वा ब्राह्मणा उपाध्यायाद् अनुज्ञां लब्ध्वा पुस्तकानि गृहीत्वा प्रचलिताः ।

अथ ते यावद् कञ्चिन् मार्गं यान्ति तावद् द्वौ पन्थानौ समायातौ । तत्र उपविष्टाः सर्व्वे । तत्रैकः प्रोवाच–"केन मार्गेण गच्छामः" । अथैकेन पुस्तकम् उद्घाट्य उक्तम्—

महाजनो[2] येन गतः स पन्थाः ।

---

(१) उपाध्यायम् अनुज्ञाप्य उपाध्यायाद् अनुज्ञां लब्ध्वा ।
(२) महाजनः साधुः, वणिक् च ।

अथ ते पण्डिता यावन् महाजनानुसृतेन[3] पथा यान्ति तावद् रासभः कश्चित् श्मशाने तिष्ठति। तैर् उक्तम्–"एतत् किम् ?" अथ द्वितीयः पुस्तकम् उद्घाट्य प्रोवाच—

श्मशाने च यस्तिष्ठति स बान्धवः।

तद् अयम् अस्मदीयो बान्धवः। ततः कश्चित् तस्य ग्रीवायां लगति कोऽपि पादौ प्रक्षालयति।

अथ यावत् दिशाम् अवलोकनं ते पण्डिताः कुर्वन्ति तावत् कश्चिद् उष्टः दृष्टः। तैर् उक्तम्–"एतत् किम् ?" अथ तृतीयेन पुस्तकम् उद्घाट्य उक्तम्—

धर्म्मस्य त्वरिता गतिः[4]।

एष धर्म्मस् तावत्। चतुर्थेनोक्तम्–

इष्टं धर्म्मेण योजयेत्[5]।

अथ तै रासभ उष्ट्रग्रीवायां बद्धः। ततः केनचिद् रजकस्याग्रे कथितम्। यावद् रजकस् तेषां पण्डित-मूर्खाणां प्रहारकरणाय समायातः तावत् ते प्रणष्टाः[6]।

---

(३) महाजनानुसृतेन वणिग्भिर् अवलम्बितेन।

(४) धर्म्मस्य गतिः त्वरिता वेगवती, अप्रतिहतेति यावत् धर्म्ममार्गेणचलतां न विपद् इति भावः।

(५) इष्टं प्रियं जनं धर्म्मेण योजयेत् धर्म्मेण सह मिलितिं कुर्य्यात्

(६) प्रणष्टाः, प्रधाविताः।

अथ यावद् अग्रे स्तोकं मार्गं यान्ति तावत् काचित् नदी समासादिता। तस्या जलमध्ये पलाशपत्रम् आयान्तं दृष्ट्वा पण्डितनैकेन उक्तम्—

यदागच्छति वै पत्रं तदस्मांस्तारयिष्यति।

एतत् कथयित्वा तत्पत्रस्य उपरि पतितो नद्या नीयते स्म। ततस् तं नीयमानम् अवलोक्य अन्येन पण्डितेन केशान्ते गृहीत्वा उक्तम्।

सर्व्वनाशे समुत्पन्ने अर्द्धं त्यजति पण्डितः।
अर्धेन कुरुते कार्य्यं सर्व्वनाशो हि दुःसहः॥

इत्युक्त्वा तस्य शिरश्छेदो विहितः।

द्वादश + अब्दान् = द्वादशाब्दान्।

यत् + आगच्छति = यदागच्छति।

शिरः + छेद = शिरश्छेदः।

---

(७) पत्रं पर्णं वाहनं च।

# भूपाल मशकोर्णनाभानाम् ।

कश्चित् भूपालो विधिसृष्टानां पदार्थानां प्रयोजन—विचारे कुतूहली बभूव। स चिरकाल विचारेण सर्वं वस्तु सप्रयोजनमेवापश्यत् । परं मशकाः ऊर्णनाभाश्च कस्मै प्रयोजनाय सृष्टा इति चिरं विचारयन् अपि न ज्ञात शशाक। अथ 'ते अनुपयुक्ता एव' विनिश्चित्य तेषां वधे रतोऽभूत्। अथ कदाचित् स महति युद्धे शत्रुभिः पराजितः भयेन प्रधावितः क्वचिद्रण्ये परिभ्रम्य श्रान्तः रात्रौ कस्यापि वृक्षस्य मूले सुप्तः । तमुपलक्ष्य कावपि शत्रुभटौ खड्गपाणी यावद् आगच्छतः, तावत्तस्यौष्ठे मशकेन दष्टः, स च प्रबुद्धः । अथ निधनमुपस्थितं पश्यन् सहसा अन्यत्र पलाय्य कस्यांचिद् गुहायां निलीय स्थितः। तदा कश्चिद् ऊर्णनाभो गुहाद्वारं तन्तुजालेन परीतम् अतनोत्। किंचित्कालानन्तरं च प्रभातं संजातम्। तदा गुहास्थितो राजा द्वयोः आत्मान्वेषिणोः शत्रु-भटयोः संलापं श्रुतवान्। तयोरेकोऽवदत् "अस्यां गुहायां स निलीनः स्यात्"। अपरः प्राह 'नैतत्संभाव्यते। यत इदं तन्तुजालमनाकुलं दृश्यते। यदि स गुहां प्रविष्टः स्यात् तथा इदं तन्तुजालं त्रुटितमाकुलं च भवेत्'। अथ तावुभौ तां गुहां शून्यां निश्चित्य यथागतं गतौ।

अनन्तरं स राजा पुनर्जातमिव आत्मानं मन्यमानो बद्धाञ्जलिरीश्वरं तुष्टाव–'भगवन् ! पूर्वेद्युरहं मशकेन रक्षितः; अद्य पुनः ऊर्णनाभेन। विविधैः प्रकारैर्महान्त मुपकारं मानुषाणामुपजनयन्ति ते सृष्टयः। तव कांचिदपि सृष्टिं विफलां न पश्यामि।' एवं स्तुत्वा स्वनगरं प्राप्य, स राजा प्रजाः पालयन् सुचिरं सुखमुवास।

तावत् + तस्य + ओष्ठे = तावत्तस्यौष्ठे।

बद्ध अञ्जलिः + ईश्वरम् = बद्धाञ्जलिरीश्वरम्।

---

# मत्स्ययोर् मण्डूकस्य च

कस्मिंश्चिज्जलाशये शतबुद्धिसहस्रबुद्धिनामानौ द्वौ मत्स्यौ प्रतिवसतः स्म। तयोर् एकबुद्धिर् नाम मण्डूको मित्रताम् आजगाम। एवं ते त्रयो जलतीरे कियन्तं कालं गोष्ठीसुखम्[1] अनुभूय पुनर् जलं प्रविशन्ति। अथ कदाचिज् जालहस्ता धीवरा अस्तमनवेलायां समायाताः। तं जलाशयं दृष्ट्वा ते मिथः प्रोचुः हंहो बहुमत्स्योऽयं ह्रदो दृश्यते स्वल्पसलिलश् च। तत् प्रभाते अत्रागमिष्यामः। इत्युक्त्वा ते स्वगृहं गताः।

अथ तेषां तत् वज्रपातसदृशं वचः श्रुत्वा ते परस्परं मन्त्रयाञ्चक्रुः। मण्डूकोऽब्रवीद् "भो भद्रौ शतबुद्धिसहस्रबुद्धी! किम् अत्र कर्त्तुं युज्यते पलायनम् अवष्टम्भो[2] वा"। तच्छ्रुत्वा सहस्रबुद्धिर् विहस्य उवाच–"भो मित्र मा भैषीर् वचनश्रवणमात्रेण। आगमनं तेषां न सम्भाव्यते। अथागच्छेयुः तदा स्वबुद्धिप्रभावेण त्वाम् आत्मानं च रक्षिष्यामि। अहम् अनेका जलगतीर् जानामि।

---

(१) गोष्ठीसुखं परस्परम् आलापजनितम् आनन्दम्।

(२) अवष्टम्भः स्तम्भः अचलनमिति यावत् इहैव अवस्थानम् इत्यर्थः।

तच्छ्रुत्वा शतबुद्धिर् आह—"भो युक्तम् उक्तं सहस्र-बुद्धिना । अथवा साधु इदम् उच्यते—

न यत्रास्ति गतिर्वायो रश्मीनाञ्च विवस्वतः ।
तत्रापि प्रविशत्याशु बुद्धिर्बुद्धिमतां सदा ॥

तद् वचनश्रवणमात्रेण जन्मस्थानं पितृक्रमागतं त्यक्तुं न शक्यते । अतो न क्वचिद् अपि गन्तव्यम् । अहं त्वां स्वबुद्धिप्रभावेण रक्षिष्यामि" ।

मण्डूक आह भद्रौ ! मम तावद् एकैव बुद्धिः सा च पलायनविषया । तद् अहम् अन्यं कञ्चिज् जलाशयं सभार्य्योऽद्यैव यास्यामि । एवम् उक्त्वा असौ रात्रिम् आसाद्य अन्यं जलाशयं गतः ।

अथान्येद्युस् तैर् मत्स्यबन्धिभिः प्रभाते आगत्य जालैर् आच्छादितो ह्रदः । सर्व्वेऽपि मत्स्यकूर्म्ममण्डूक-कर्कटादयो जलचरा निबद्धा गृहीताश् च । तौ च शत-बुद्धिसहस्रबुद्धी पलायमानौ चिरम् आत्मानं कुटिलचारेण[३] रक्षन्तावपि जाले निपतितौ व्यापादितौ च ।

अथ अपराह्णसमये हृष्टास् ते धीवरा गृहं प्रति प्रस्थिताः । शतबुद्धिर् गुरुत्वात् एकेन शिरसि धृतः । अपरेण रज्जुबद्धः सहस्रबुद्धिर् नीयते स्म । ततो वापी-

---

(३) कुटिलचारेण कपटगत्या ।

गतेन[४] एकबुद्धिमण्डूकेन अभिहितं पुरः स्वपत्न्याः "पश्य पश्य प्रिये—

शतबुद्धिः शिरस्थोऽयं लम्बते च सहस्रधीः ।
एकबुद्धिरहं भद्रे क्रीडामि विमले जले" ॥

रक्षन्तौ + अपि = रक्षन्तावपि ।

---

(४) वापीगतेन दीर्घिकास्थितेन ।

# रासभशृगालयोः

अस्ति कस्मिंश्चिद् अधिष्ठाने मदोद्धतो नाम गर्दभः। स दिवा रजकगृहे भारोद्वहनं कृत्वा रात्रौ स्वेच्छया पर्य्यटति। अथ एकदा तस्य रात्रौ क्षेत्रेषु पर्य्यटतः केनचित् शृगालेन सार्द्धं मैत्री बभूव। तौ च वृतिभङ्गं[1] कृत्वा कर्कटिकाक्षेत्रेषु[2] प्रविश्य तत्फलभक्षणं स्वेच्छया कृत्वा प्रत्यूषे स्वस्थानं व्रजतः।

अथ कदाचित् क्षेत्रमध्यस्थितेन मदोद्धतरासभेन शृगालोऽभिहितः—भो भगिनीसुत पश्य अतिनिर्मला रजनी। तद् अहं गीतं करिष्यामि। कथय, कतमेन रागेण करोमि। स प्राह—माम किम् अनेन अनर्थप्रचालनेन,[3] चौरकर्म्मप्रवृत्तौ आवाम्। चौरैः निभृतैर् एवस्थातव्यम्। किञ्च त्वदीयं गीतं शङ्खनादानुवादि,[4] न मधुरम्। दूराद् अपि श्रुत्वा उत्थाय क्षेत्ररक्षका बन्धं वधं च विधास्यन्ति। तद् भक्षय तावद् अमृतरसाश् चिर्भटीः[5]। मा त्वम् अत्र गीतव्यापारपरो भव।

---

(१) पशूनां निवारणार्थं शस्यक्षेत्राणाम् परितः आवरणं वृतिः।
(२) कर्कटिका फलविशेषः ककड़ी इति भाषा।
(३) अनर्थप्रचालनेन अनिष्टोत्थापनेन।
(४) शङ्खनादानुवादि शङ्खध्वनिसदृशं, शङ्खध्वनिवत् कर्कशम् इति यावत्।

तच्छ्रुत्वा रासभ आह—"भो वनाश्रयत्वात् त्वं गीतरसं न वेत्सि तेनैतद् ब्रवीषि"। शृगाल आह—"माम अस्त्येतत् परं त्वं कठोरम् उन्नदसि। तत् किम् अनेन नादेन स्वार्थभ्रंशिना"। रासभ आह—"धिङ् मूर्ख किम् अहं गीतं न जानामि ? कथं भगिनीसुत ! माम् अनभिज्ञं वदसि निवारयसि च"। शृगाल "आह—माम यद्येवं तद् अहं वृत्तिद्वारदेशस्थः क्षेत्रपालम् अवलोकयामि। त्वं पुनः स्वेच्छया गीतं कुरु"।

तथानुष्ठिते गर्दभ उत्कन्धरं[६] शब्दायितुम् आरेभे। ततः क्षेत्रपालो रासभशब्दितं श्रुत्वा क्रोधात् दन्तान् दन्तैर् निपीडयन् लगुडम् उद्यम्य प्रधावितः। अथ रासभो लगुडप्रहारैस् तथा प्रताडितः यथा भूपृष्ठे पतितः पञ्चत्वं गतः।

मद + उद्धत—रासभेन = मदोद्धतरासभेन।
वन + आश्रयत्वात् = वनाश्रयत्वात्।

---

(६) उत्कन्धरम् उत् उन्नमिता कन्धरा ग्रीवा यस्यां क्रियायाम् ग्रीवाम् उन्नमय्य इत्यर्थः।

# ब्राह्मणशक्तुकलसयोः

कस्मिंश्चिद् अधिष्ठाने कश्चित् स्वभावकृपणो[1] ब्राह्मणः प्रतिवसति स्म। तेन भिक्षार्जितैः शक्तुभिः कलसः सम्पूरितः। तञ्च कलसं नागदन्ते[2] अवलम्ब्य तस्याधस्तात् खट्वां निधाय सततम् एकदृष्ट्या तम् अवलोकयन् रात्रौ चिन्तयामास "शक्तुभिः परिपूर्णोऽयं घटो वर्त्तते। यदि दुर्भिक्षं भविष्यति तदा पणशतम् अस्मिन्नुत्पत्स्यते। ततश्च तेन अजाद्वयम् अहं ग्रहीष्ये। ततः षाण्मासिकप्रसववशाद् अजायूथं भविष्यति। ततोऽजाभिर् गावः[3]। गवां प्रसवात् तदपत्यविक्रयं करिष्यामि। ततो गोभिर् महिष्यः। महिषीभिर् वडवाः[4]। वडवाप्रसवतो मम प्रभूता[5] अश्वा भविष्यन्ति। तेषां विक्रयात् प्रभूतं सुवर्णं भविष्यति। सुवर्णेन चतुःशालं गृहं[6] सम्पत्स्यते। ततश्च कश्चित् ब्राह्मणो मम गृहम्

---

(१) स्वभावकृपणः स्वभावेन प्रकृत्या कृपणः व्ययविमुखः।
(२) नागदन्तः गृहभित्तौ प्रोतो दण्डविशेषः तदुपरि वस्त्वावलम्बनार्थः।
(३) गृहीतव्याः इति शेषः। एवम् उत्तरत्रापि।
(४) वडवा घोटकी।
(५) प्रभूता बहवः।
(६) चतुःशालम्—चतस्रः शाला कक्ष्याः (महल इति भाषा) सन्त्यस्मिन् तादृशं गृहम्। कक्ष्याचतुष्टयसम्पन्नं भवनम् इत्यर्थः।

अभ्येत्य रूपाढयां[७] कन्यां मह्यम् प्रदास्यति। तस्याः पुत्रो जनिष्यते। तस्याहं सोमशर्म्मा इति नाम करिष्यामि। ततस् तस्मिन् जानुप्रचलनयोग्ये[८] सञ्जाते अहं पुस्तकं गृहीत्वा अश्वशालायाः पृष्ठदेशे समुपविश्य तत् पठिष्यामि। एतस्मिन्नन्तरे सोमशर्म्मा मां दृष्ट्वा जनन्या उत्सङ्गात्[९] जानुप्रचलनपरः अश्वखुरासन्नवर्त्ती मत्समीपम् आगमिष्यति। ततोऽहं ब्राह्मणीं कोपाविष्टो ऽभिधास्यामि 'गृह्यतां गृह्यतां बालकः।' सा तु गृहकर्म्मव्यग्रतया मद्वचनं न श्रोष्यति। ततोऽहं समुत्थाय तां पाद प्रहारेण ताडयिष्यामि"। एवं तेन तद्ध्यानावस्थितेन पादप्रहारस् तथा मुक्तो यथा शक्तुपूर्णो घटो भग्नः।

भिक्षा + अर्जितैः -- = भिक्षार्जितैः।
रूप + आढ्याम् = रूपाढ्याम्।
अस्मिन् + उत्पत्स्यते = अस्मिन्नुत्पत्स्यते।
तत् + ध्यान + अवस्थितेन = तद्ध्यानावस्थितेन।

---

(७) रूपाढ्यां रूपेण आढ्यां सम्पन्नां रूपवतीम् इति यावत्।
(८) जानुप्रचलनयोग्ये जानुभ्यां रिङ्गणसमर्थे।
(९) उत्सङ्गात् क्रोडात्।

## घण्टोष्ट्रस्य

कस्मिंश्चित् अधिष्ठाने उज्ज्वलको नाम रथकारः प्रतिवसति स्म। स च अतीव दारिद्र्योपहतः चिन्तितवान् "अहो धिक्, इयं दरिद्रता अस्माकं गृहे। यतः सर्वोऽपि जनः स्वकर्मणि रतः तिष्ठति, अस्माकं पुनः व्यापारो न अत्र अधिष्ठाने अर्हति। यतः सर्वेषां लोकानां चिरन्तनाः चतुर्भूमिकाः गृहाः सन्ति, मम च अत्र कोऽपि न। तत् किं मदीयेन रथकारत्वेन प्रयोजनम् ? इति चिन्तयित्वा देशात् निष्क्रान्तः। यावत् किंचित् वनं गच्छति, तावत् वनमध्ये सूर्यास्तमनवेलायां स्वयूथात् भ्रष्टां, प्रसववेदनया पीड्यमानाम् उष्ट्रीमपश्यत्। स च दासेरकेण युक्तामुष्ट्रीं गृहीत्वा स्वस्थानाभिमुखं प्रस्थितः। गृहम् आसाद्य रज्जुकां गृहीत्वा ताम् उष्ट्रिकां बबन्ध।

ततश्च तीक्ष्णं परशुम् आदाय, तस्याः कृते पल्लवानाम् आनयनार्थं पर्वतस्य एकदेशे गतः। तत्र च नूतनानि कोमलानि बहूनि पल्लवानि छित्त्वा शिरसि आरोप्य तस्या अग्रे निचिक्षेप। तया च तानि शनैः शनैः

भक्षितानि। पश्चात् पल्लवानां भक्षणात् अहर्निशं पीवरतनुः उष्ट्री संजाता। सोऽपि दासेरको महान् उष्ट्रः संजातः। स नित्यमेव दुग्धं गृहीत्वा स्व कुटुम्बं पालयति।

अथ रथकारेण बल्लभत्वात् दासेरकस्य ग्रीवायाम् एका महती घण्टा बद्धा। पश्चात् रथकारो व्यचिन्तयत्, 'अहो! किम् अन्यैः दुष्कृतकर्मभिः, यावत् मम एतस्मात् एव उष्ट्रीपरिपालनात् अस्य कुटुम्बस्य श्रेयः सञ्जातं तत् किमन्येन व्यापारेण।' एवं विचिन्त्य गृहमागत्य प्रियां प्राह—"भद्रे, समीचीनः अयं व्यापारः। तव सम्मतिः चेत् कुतोऽपि धनिकात् किञ्चित् द्रव्यमादाय अहं करभाणां ग्रहणाय गुर्जरदेशे गत्वा उष्ट्रीं नीत्वा समागच्छामि।"

ततश्च गुर्जरदेशे गत्वा उष्ट्रीं गृहीत्वा स्वगृहम् आगतः। किम् बहुना, तेन तथा कृतं यथा तस्य प्रचुरा उष्ट्राः करभाश्च संजाताः। ततस्तेन महत् उष्ट्रयूथं कृत्वा रक्षापुरुषो धृतः। तस्मै प्रति वर्षं वृत्त्या करभम् एकं प्रयच्छति। अन्यच्च अहर्निशं तस्य दुग्धपानं निरूपितम्। एवं रथकारोऽपि नित्यमेव उष्ट्रीकरभव्यापारं कुर्वन् सुखेन तिष्ठति। अथ ते दासेरकाः अधिष्ठानोपवने आहारार्थं गच्छन्ति। कोमलाः वल्लीः यथेच्छया भक्षयित्वा, महति सरसि पानीयं पीत्वा सायंतन समये मन्दं मन्दं लीलया

गृहम् आगच्छन्ति । स च पूर्वदासेरकः मदस्य अतिरेकात् पृष्ठ आगत्य मिलति । ततस्तैः करभैरभिहितम्—
"अहो ! मन्दमतिः अयं दासेरकः, यतः यूथात् भ्रष्टः पृष्ठे स्थित्वा घण्टां वादयन् आगच्छति । यदि कस्यापि दुष्टस्य सत्त्वस्य मुखे पतिष्यति, ततः नूनम् अस्य मृत्युः भविष्यति ।"

तेषां तत् वनं गाहमानानां कश्चित् सिंहः घंटायाः रवम् आकर्ण्य समायातः। यावत् अवलोकयति, तावत् उष्ट्रीदासेरकाणां यूथं गच्छति । एकस्तु पुनः पृष्ठे क्रीडां कुर्वन् वल्लरीः चरन् यावत् तिष्ठति, तावत् अन्ये दासेरकाः पानीयं पीत्वा स्वगृहं गताः । सोऽपि वनात् निष्क्रम्य यावत् दिशः अवलोकयति, तावत् न कंचित् मार्गं पश्यति वेत्ति च। यूथात् भ्रष्टः मन्दं मन्दं बृहत् शब्दं कुर्वन् यावत् कियत् दूरं गच्छति,तावत् तच्छब्दानुसारी सिंहोऽपि क्रमं विधाय निभृतः अग्रे व्यवस्थितः । ततो यावत् उष्ट्रः समीपम् आगतः,तावत् सिंहेन लम्फयित्वा ग्रीवायां गृहीतः ।

सतां वचनमादिष्टं मदेन न करोति यः ।
स विनाशमवाप्नोति घण्टोष्ट्र इव सत्वरम् ॥

अधिष्ठान + उपवने=अधिष्ठानोपवने ।
तत् + शब्द + अनुसारी = तच्छब्दानुसारी ।

# सुभाषितानि

गुरुप्रशंसा--

एकमेवाक्षरं यस्तु गुरुः शिष्यं प्रबोधयेत्।
पृथिव्यां नास्ति तद् द्रव्यं यद्दत्त्वा चानृणी भवेत्॥
गुरुभ्यस्त्वासनं देयमभिवाद्याभिपूज्य च।
गुरुमभ्यर्च्य वर्धन्ते आयुषा यशसा श्रिया॥

मित्रप्रशंसा—

मित्रवान् साधयत्यर्थान् दुःसाध्यानपि वै यतः।
तस्मान्मित्राणि कुर्वीत समानान्येव चात्मनः॥
ददातिप्रतिगृह्णाति गुह्यमाख्याति पृच्छति।
भुङ्क्ते भोजयते चैव षड् विधं प्रीतिलक्षणम्॥
परोक्षे कार्य हन्तारं प्रत्यक्षे प्रिय वादिनम्।
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम्॥

मृगा मृगैः सङ्गमनुव्रजन्ति,
गावश्च गोभिस्तुरगास्तुरंगै।
मूर्खाश्च मूर्खैः सुधियः सुधीभिः,
समानशीलव्यसनेषुसख्यम्॥

अयं निजः परो वेतिगणना लघुचेतसाम् ।
उदारचरितानान्तु वसुधैव कुटुम्बकम् ॥

सत्संगतिप्रशंसा—

महाजनस्य संसर्गः कस्य नोन्नति कारकः ।
पद्मपत्रस्थितं वारि धत्ते मुक्ताफलश्रियम् ॥
अहो दुर्जनसंसर्गान्मानहानिः पदे पदे ।
पावको लोहसंगेन मुग्दरैरभिहन्यते ॥
न स्थातव्यं, न गन्तव्यं क्षणमप्यधमैः सह ।
पयोऽपि शौण्डिकी हस्ते मदिरां मन्यते जनः ॥
सद्भिरेव सहासीत सद्भिः कुर्वीत संगतिम् ।
सद्भिर्विवादं मैत्रीं च नासद्भिः किंचिदाचरेत् ॥

वाङ् माधुर्यम्—

प्रियवाक्य प्रदानेन सर्वे तुष्यन्ति जन्तवः ।
तस्मात्तदेव वक्तव्यं, वचने का दरिद्रता ।
को हि भारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः सुविद्यानां कःपरः प्रियवादिनाम् ॥

वाङ्माधुर्यान्नान्यदस्ति प्रियत्वम्,
वाक्पारुष्याच्चोपकारोऽपि नष्टः ।
किं, तद् द्रव्यं कोकिलेनोपनीतम्,
को वा लोके गर्दभस्यापराधः ॥

धर्म प्रशंसा—

एक एव सुहृद्धर्मो निधने ऽप्यनुयाति यः।
शरीरेण समं नाशं सर्वमन्यद्धि गच्छति॥
वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्॥
धृतिः क्षमा दमो ऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्यासत्यमक्रोधो दशकं धर्मलक्षणम्॥
धर्मो माता पिता चैव धर्मो बन्धुः सुहृत्तथा।
धर्मः स्वर्गस्य सोपानं धर्मात्स्वर्गमवाप्यते॥
संक्षेपात्कथ्यते धर्मो जनाः! किं विस्तरेण वः।
परोपकारः पुण्याय पापाय पर पीडनम्॥
श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम्।
आत्मनः प्रति कूलानि परेषां न समाचरेत्॥
धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः।
तस्माद्धर्मो नहन्तव्यो मा नो धर्मोहतोऽवधीत्॥
क्षमातुल्यं तपो नास्ति, संतोषान्न परं सुखम्।
न च तृष्णापरो व्याधिर्न च धर्मो दयापरः॥

सत्यप्रशंसा—

नास्ति सत्यसमो धर्मो नासत्याद्विद्यते परम्।
नहि तीव्रतरं किंचिदनृतादिह विद्यते॥
न सा सभा यत्र न सन्ति वृद्धाः, वृद्धा न ते ये नवदन्ति धर्मम्।
धर्मो न वै यत्र च नास्ति सत्यं, सत्यं न तद् यच्छलमभ्युपैति॥

**ब्रह्मचर्यम्—**

ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत ।
इन्द्रो ह ब्रह्मचर्येण देवेभ्यः स्वराभरत् ॥
समुद्रतरणे यद्वदुपायो नौः प्रकीर्तिता ।
संसार तरणे तद्वद् ब्रह्मचर्यं प्रकीर्त्तितम् ॥
यथा गजपदे सर्वे पादा अन्तर्भवन्ति हि ।
वै तस्मादधिकं किंचिद् ब्रह्मचर्याद्धि विद्यते ॥

**अहिंसा—**

अहिंसा परमो धर्मस्तथाऽहिंसा परन्तपः ।
अहिंसा परमं सत्यं यतो धर्मः प्रवर्त्तते ॥
अहिंसा परमो यज्ञस्तथाऽहिंसा परं फलम् ।
अहिंसा परमं मित्रमहिंसा परमं सुखम् ॥
स्वमांसं परमांसेन यो वर्धयितुमिच्छति ।
नारदः प्राह धर्मात्मा नियतं सोऽवसीदति ॥

**जीवितसाफल्यम्—**

स जातो येन जातेन याति वंशः समुन्नतिम् ।
परिवर्त्तिनि संसारे मृतः को वा न जायते ॥
आत्मार्थं जीवलोकेऽस्मिन् को न जीवति मानवः ।
परं परोपकारार्थं यो जीवति स जीवति ॥
चलं चित्तं, चलं वित्तं चले जीवितयौवने ।
चलाचलमिदं सर्वं कीर्त्तिर्यस्य स जीवति ॥

क्षमा—

एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥
सोऽस्य दोषो न मन्तव्यः क्षमा हि परमं बलम् ।
क्षमा ऽ गुणोह्यशक्तानां शक्तानां भूषणं क्षमा ॥
क्षमा वशी कृति लोके क्षमया किं न साध्यते ।
शान्ति खड्गः करे यस्य दुर्जनः किं करिष्यति ॥
तपो बलं तापसानां ब्रह्म ब्रह्मविदां बलम् ।
हिंसा बलंमसाधूनां क्षमा गुणवतां बलम् ॥
अक्रोधेन जयेत् क्रोधमसाधुंसाधुना जयेत् ।
जयेत्कदर्यं दानेन जयेत् सत्येनचानृतम् ॥
क्षमा शस्त्रं करे यस्य दुर्जनः किं करिस्ष्यति ।
अतृणे पतितो वन्हिः स्वयमेव प्रशाम्यति ॥

पण्डित लक्षणम्—

निषेवते प्रशस्तानि निन्दितानि न सेवते ।
अनास्तिकः श्रद्दधान एतत् पण्डित लक्षणम् ॥
क्रोधो हर्षश्च दर्पश्च ह्रीः स्तम्भो मान्यमानिता ।
यमर्थानापकर्षन्ति स वै पण्डित उच्यते ॥

क्षिप्रं विजानाति चिरं शृणोति,
विज्ञाय चार्थं भजते न कामात् ।
नासम्पृष्टो ह्युपयुङ्क्ते परार्थे ।
तत् प्रज्ञानं प्रथमं पण्डितस्य ॥

न हृष्यत्यात्मसम्माने नावमानेन तप्यते ।
गाङ्गो हृद इवा क्षोभ्यो यः स पण्डित उच्यते ॥

मूर्ख लक्षणम् --

स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति ।
मिथ्याचरति मित्रार्थे यश्च मूढः सउच्यते ॥
अकामान् कामयति यः कामयान् परित्यजेत् ।
बलवन्तं च यो द्वेष्टी तमाहुर्मूढ चेतसम् ॥
परं क्षिपति दोषेण वर्त्तमानः स्वयं तथा ।
यश्च क्रुध्यत्यनीशानः स च मूढतमो नरः ॥

सुभाषितानि---

द्वाविमौ पुरुषौ राजन् स्वर्गस्योपरि तिष्ठतः ।
प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥
द्वावम्भसि निवेष्टव्यौ गले बद्ध्वा दृढां शिलाम् ।
धनवन्तमदात्तारं दरिद्रं चातपस्विनम् ॥
षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घ सूत्रिता ॥

असंत्या गात् पापकृतामापापां—
स्तुल्यो दण्डः स्पृशते मिश्र भावात् ।
शुष्केणार्द्रं दह्यते मिश्रभावात् ।
तस्मात्पापैः सह सन्धिं न कुर्यात् ॥

वृत्तं यत्नेन संरक्षेद्वित्तमेति च याति च ।
अक्षीणो वित्ततः, क्षीणो वृत्ततस्तु हतो हतः ॥

एकः स्वादु न भुञ्जीत एकश्चार्थान्न चिन्तयेत् ।
एको न गच्छेदध्वानं नैकः सुप्तेषु जागृयात् ॥

तृणानि भूमिरुदकं वाक् चतुर्थी च सुनृता ।
सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन ॥

बुद्ध्या भयं प्रणुदति, तपसा विन्दते महान् ।
गुरुशुश्रूषया ज्ञानं, शान्ति योगेन विन्दति ॥

सुलभाः पुरुषा राजन् सततं प्रिय वादिनः ।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥

अष्टौ गुणाः पुरुषं दीपयन्ति,
प्रज्ञा च कौल्यं च-श्रुतं दमश्च ॥
पराक्रमश्चाबहु भाषिता च,
दानं यथाशक्ति कृतज्ञता च ॥

हितं यत्सर्वभूतानामात्मश्च सुखावहम् ।
तत्कुर्यादीश्वरे ह्येतन्मूलं सर्वार्थ सिद्धये ॥

अग्निस्तेजो महल्लोके गूढस्तिष्ठति दारुषु ।
न चोपयुङ्क्ते तद्दारु यावन्नोद्दीप्यते परैः ॥

स एव खलु दारुभ्यो यदा निर्मथ्य दीप्यते ।
तद्दारु च वनं चान्यन्निर्दहत्याशु तेजसा ॥

एवमेव कुले जाताः पावकोपमतेजसः ।
क्षमावन्तो निराकाराः काष्ठेऽग्निरिव शेरते ॥

पीठं दत्त्वा साधवे ऽभ्यागताय,
आनीयापः परिनिर्णिज्य पादौ ।
सुखं पृष्ट्वा प्रति वे दूयात्मसंस्था,
ततोदद्यादन्नमवेक्ष्यधीरः ॥

अप्रशस्तानि कार्याणि यो मोहादनु तिष्ठति ।
सतेषां विपरिभ्रँशाद् भ्रश्यते जीवितादपि ॥
कर्मणां तु प्रशस्तानामनुष्ठानं सुखा वहम् ।
तेषामेवाननुष्ठानं पश्चात्तापकरंमतम् ॥
धृतिः शमो दमः शौचं कारुण्यं वाग ऽनिष्ठुरा ।
मित्राणां चानभिद्रोहः सप्तैता समिधः श्रियः ॥
आलस्यं मदमोहौ च चापलं गोष्ठिरेवच,
स्तब्धता चाभिमानित्वं तथा त्यागित्वमेव च ।
ए तेवै सप्त दोषाः स्युः सदा विद्यार्थिनां मताः ॥
सुखार्थिनां कुतो विद्या नास्ति विद्यार्थिनः सुखम् ।
सुखार्थी वा त्यजेत् विद्यां विद्यार्थी वा त्यजेत् सुखम् ॥

अनुगन्तुं सतां वर्त्म कृत्स्नं यदि न शक्यते ।
स्वल्पमप्यनुगन्तव्यं मार्गस्थो नावसीदति ॥
प्रत्यहं प्रेत्यवेक्षेत नरश्चरितमात्मनः ।
किं नु मे पशुभिस्तुल्यं किं नु सत्पुरुषैरपि ॥

न चौ चोरहार्यं न च राजहार्यं,
न भ्रातृभाज्यं न च भारकारि।
व्यये कृते वर्धत एव नित्यम्,
विद्याधनं सर्वधन प्रधानम् ॥

अभिवादन शीलस्य, नित्यं वृद्धोपसेविनः
चत्वारि तस्य वर्द्धन्ते, आयुर्विद्या यशोबलम् ॥

वदनं प्रसादसदनं सदयं हृदयं सुधामुचो वाचः।
करणं परोपकरणं येषां केषां न ते वन्द्याः ॥

संपत्तौ च विपत्तौ च महतामेक रूपता।
उदये सविता रक्तः रक्तश्चास्तमये हि सः।

खलः सर्षपमात्राणि परच्छिद्राणि पश्यति
आत्मनो बिल्वमात्राणि पश्यन्नपि नपश्यति।

परोपकराय फलन्ति वृक्षाः,
परोपकाराय वहन्ति नद्यः।
परोपकाराय दुहन्ति गावः,
परोपकारार्थमिदं शरीरम् ॥

सन्तोषामृत तृप्तानां यत्सुखं शान्तचेतसाम्।
कुतस्तद्धनलुधानामितश्चेतश्च धावताम् ॥

गुणेष्वेव हि कर्त्तव्यः प्रयत्नः पुरुषैः सदा।
गुण युक्तो दरिद्रो ऽपि नेश्वरैरगुणैः समः ॥

उद्यमेन ह सिध्यन्ति कार्याणि न मनोरथैः।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥

बहूनामल्पसाराणां समवायो दुरत्ययः।
तृणै विंधीयते रज्जुर्बध्यन्ते तेन दन्तिनः॥
काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः
वसन्तसमये प्राप्ते काकः काकः, पिकः पिक॥
हीयते हि मतिस्तात हीनैः सह समागमात्।
समैश्च समतामेति विशिष्टैश्च विशिष्टताम्॥
यो न संचरते देशान्यो न सेवेत पंडितान्।
तस्य संकुचिता बुद्धि घृंतबिन्दुरिवाम्भमिसि॥
यस्तु संचरते देशान्यस्तु सेवेत पण्डितान्।
तस्य विस्तारिता बुद्धिस्तैलबिन्दुरिवाम्भसि॥
अतिदानाद्बलिर्बद्धो ह्यतिमानात्सुयोधनः।
विनष्टो रावणो लौल्यादति सर्वत्र वर्जयेत्॥
शैले शैले न माणिक्यं, मौक्तिकं न गजे गजे।
साधवो न हि सर्वत्र, चन्दनं नैव वने वने॥
जलबिन्दु निपातेन क्रमशः पूर्यते घटः।
स हेतुः सर्वविद्यानां धर्मस्य च धनस्य च॥
धनधान्य प्रयोगेषु विद्या संग्रहणेषु च।
आहारे व्यवहारे च त्यक्त लज्जः सुखी भवेत्॥
हस्तस्य भूषणं दानं, सत्यं कण्ठस्य भूषणम्।
श्रोत्रस्य भूषणं शास्त्रं, भूषणे किं प्रयोजनम्॥

अजरामरवत्प्राज्ञो विद्यामर्थं च चिन्तयेत् ।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥
मणिना वलयं वलयेन मणिर्मणिना वलयेन-
विभाति करः ।
कविना चविभु र्विभुना च कविः कविना विभुना च
विभातिसभा ॥
शशिना च निशा निशया च शशी शशिना निशया
च विभाति नभः ।
पयसा कमलं कमलेन पयः, पयसा कमलेन विभाति
सरः ॥

सम्पूर्णम्